यमुना चाक्षयस्रोताः कृष्णश्चेह तपोरतः ।
अत्र राजा महेष्वासो मांधाताऽयजत स्वयम् ॥ ९०२
एषा सरस्वती रम्या दिव्या चौघवती नदी ।
एतद्विनशनं नाम सरस्वत्या विशांपते ॥ ९०३
द्वारं निषादराष्ट्रस्य येषां दोषात्सरस्वती ।
प्रविष्टा पृथिवीं वीर मा निषादा हि मां विदुः ॥ ९०४
एष वै चमसोद्भेदो यत्र दृश्या सरस्वती ।
एतद्विष्णुपदं नाम दृश्यते तीर्थमुत्तमम् ।
एष रम्या विपाशा च नदी परमपावनी ॥ ९०५
काश्मीरमंडलं चैतत्सर्वपुण्यमरिंदम ।
महर्षिभिश्चाध्युषितं पश्येदं भ्रातृभिः सह ॥ ९०६
एतद्द्वारं महाराज मानसस्य प्रकाशते ।
वर्षमस्य गिरेर्मध्ये रामेण श्रीमता कृतम् ॥ ९०७
एष वातिकखंडो वै प्रख्यातः सत्यविक्रमः ।
नात्यवर्तत यद्द्वारं विदेहादुत्तरं च यः ॥ ९०८
ह्रदश्च कुशवानेष यत्र पद्मं कुशेशयम् ।
वितस्तां पश्य राजेंद्र सर्वपापप्रमोचनीम् ॥ ९०९
महर्षिभिश्चाध्युषितां शीततोयां सुनिर्मलाम् ।
एषा मधुविला राजन् समंगा संप्रकाशते ॥ ९१०
एतत्कर्दमिलं नाम भरतस्याभिषेचनम् ।
एते कनखला राजन्नृषीणां दयिता नगाः ॥ ९११
एषा प्रकाशते गंगा युधिष्ठिर महानदी ।
उशीरबीजं मैनाकं गिरिश्वेतं च भारत ॥ ९१२
समतीतोऽसि कौंतेय कालशैलं च पार्थिव ।
एषा गंगा सप्तविधा राजते भरतर्षभ ॥ ९१३
स्थानं विरजसं पुण्यं यत्राग्निर्नित्यमिध्यते ।
एतद्वै मानुषेणाद्य न शक्यं द्रष्टुमद्भुतम् ॥ ९१४
श्वेतं गिरिं प्रवेक्ष्यामो मंदरं चैव पर्वतम् ।
यत्र माणिवरो यक्षः कुबेरश्चैव यक्षराट् ॥ ९१५
दुर्गमाः पर्वताः पार्थ समाधिं परमं कुरु ।
एतद्विकीर्णं सुश्रीमत् कैलासशिखरोपमम् ॥ ९१६

यत्पश्यसि नरश्रेष्ठ पर्वतप्रतिमं स्थितम् ।
एतान्यस्थीनि दैत्यस्य नरकस्य महात्मनः ॥ ९१७
पुरातनेन देवेन विष्णुना परमात्मना ।
दैत्यो विनिहतस्तात सुरराजहितैषिणा ॥ ९१८

वैं० उ० —ते शूरास्ततधन्वानस्तूणवंतः समार्गणाः ।
बद्धगोधांगुलित्राणाः खड्गवंतोऽमितौजसः ॥ ९१९
परिगृह्य द्विजश्रेष्ठान् ज्येष्ठाः सर्वधनुष्मताम् ।
पांचालीसहिता राजन् प्रययुर्गंधमादनम् ॥ ९२०
सरांसि सरितश्चैव पर्वतांश्च वनानि च ।
वृक्षांश्च बहुलच्छायान् ददृशुर्गिरिमूर्धनि ॥ ९२१
चेरुरुच्चावचाकारान् देशान्विषमसंकटान् ।
पश्यंतो मृगजातानि बहूनि विविधानि च ॥ ९२२
प्रविशत्स्वथ वीरेषु पर्वतं गंधमादनम् ।
चंडवातं महद्वर्षं प्रादुरासीद्विशांपते ॥ ९२३
ततो रेणुः समुद्भूतः सपत्रबहुलो महान् ।
पृथिवीं चांतरिक्षं च द्यां चैव सहसाऽऽवृणोत् ॥ ९२४
न चापि शेकुस्तत्कर्तुमन्योन्यस्याभिभाषणम् ।
न चापश्यंस्ततोऽन्योन्यं तमसावृतचक्षुषः ।
आकृष्यमाणा वातेन साश्मचूर्णेन भारत ॥ ९२५
द्रुमाणां वातभग्नानां पततां भूतलेऽनिशम् ।
अन्येषां च महीजानां शब्दः समभवन्महान् ॥ ९२६
द्यौः स्वित्पतति किं भूमिर्दीर्यते पर्वतो नु किम् ।
इति ते मेनिरे सर्वे पवनेनापि मोहिताः ॥ ९२७
ते पथानंतरान्वृक्षान् वल्मीकान्विषमाणि च ।
पाणिभिः परिमार्गंतो भीता वायोर्निलिल्यिरे ॥ ९२८
ततः कार्मुकमादाय भीमसेनो महाबलः ।
कृष्णामादाय संगम्य तस्थावाश्रित्य पादपम् ॥ ९२९
मंदीभूते तु पवने तस्मिन्रजसि शाम्यति ।
महद्भिर्जलधारौघैर्वर्षमभ्याजगाम ह ॥ ९३०
भृशं चटचटाशब्दो वज्राणां क्षिप्यतामिव ।

ततस्ताश्चंचलाभासश्चेरुरभ्रेषु विद्युतः ॥ ९३१

ततोऽश्मसहिता धारा संवृण्वत्यः समंततः ।
प्रपेतुरनिशं तत्र शीघ्रवातसमीरिताः ॥ ९३२

तत्र सागरगा ह्यापः कीर्यमाणाः समंततः ।
प्रादुरासन्सकलुषाः फेनवत्यो विशांपते ॥ ९३३

वहंत्यो वारि बहुलं फेनोडुपपरिप्लुतम् ।
परिसस्रुर्महाशब्दाः प्रकर्षंत्यो महीरुहान् ॥ ९३४

तस्मिन्नुपरते शब्दे वाते च समतां गते ।
गते ह्यंभसि निम्नानि प्रादुर्भूते दिवाकरे ॥ ९३५

निर्जग्मुस्ते शनैः सर्वे समाजग्मुश्च भारत ।
प्रतस्थिरे पुनर्वीराः पर्वतं गंधमादनम् ॥ ९३६

क्रोशमात्रं प्रयातेषु पांडवेषु महात्मसु ।
पद्भ्यामनुचिता गंतुं द्रौपदी समुपाविशत् ॥ ९३७

श्रांता दुःखपरीता च वातवर्षेण तेन च ।
सौकुमार्याच्च पांचाली संमुमोह तपस्विनी ॥ ९३८

तां पतंतीं वरारोहां भज्यमानां लतामिव ।
नकुलः समभिद्रुत्य परिजग्राह वीर्यवान् ॥ ९३९

तामवेक्ष्य तु कौंतेयो विवर्णवदनां कृशाम् ।
अंकमानीय धर्मात्मा पर्यदेवयदातुरः ॥ ९४०

कथं वेश्मसु गुप्तेषु स्वास्तीर्णशयनोचिता ।
भूमौ निपतिता शेते सुखार्हा वरवर्णिनी ॥ ९४१

सुकुमारौ कथं पादौ मुखं च कमलप्रभम् ।
मत्कृतेऽद्य वरार्हायाः श्यामतां समुपागतम् ॥ ९४२

किमिदं द्यूतकामेन मया कृतमबुद्धिना ।
आदाय कृष्णां चरता वने मृगगणायुते ॥ ९४३

सुखं प्राप्स्यसि कल्याणि पांडवान् प्राप्य वै पतीन् ।
इति द्रुपदराजेन पित्रा दत्तायतेक्षणा ॥ ९४४

तत्सर्वमनवाप्येयं श्रमशोकाध्वकर्शिता ।
शेते निपतिता भूमौ पापस्य मम कर्मभिः ॥ ९४५

तथा लालप्यमाने तु धर्मराजे युधिष्ठिरे ।



धौम्यप्रभृतयः सर्वे तत्राजग्मुर्द्विजोत्तमाः ॥ ९४६
ते समाश्वासयामासुराशीर्भिश्चाप्यपूजयन् ।
रक्षोघ्नांश्च तथा मंत्रान् जेपुश्चक्रुश्च ते क्रियाः ॥ ९४७
स्पृश्यमाना करैः शीतैः पांडवैश्च मुहुर्मुहुः ।
सेव्यमाना च शीतेन जलमिश्रेण वायुना ॥ ९४८
पांचाली सुखमासाद्य लेभे चेतः शनैः शनैः ॥ ९४९
परिगृह्य च तां दीनां कृष्णामजिनसंस्तरे ।
पार्था विश्रामयामासुर्लब्धसंज्ञां तपस्विनीम् ॥ ९५०
उवाच च कुरुश्रेष्ठो भीमसेनमिदं वचः ।
बहवः पर्वता भीम विषमा हिमदुर्गमाः ।
तेषु कृष्णा महाबाहो कथं नु विचरिष्यति ॥ ९५१
भी० उ०—त्वां राजन् राजपुत्रीं च यमौ च पुरुषर्षभ ।
स्वयं नेष्यामि राजेंद्र मा विषादे मनः कृथाः ॥ ९५२
हैडिंबश्च महावीर्यो विहगो मद्बलोपमः ।
वहेदनघ सर्वान्नो वचनात्ते घटोत्कचः ॥ ९५३
भ्रातुर्वचनमाज्ञाय भीमसेनो घटोत्कचम् ।
आदिदेश नरव्याघ्रस्तनयं शत्रुकर्शनम् ॥ ९५४
ते त्वाशुगतिभिर्वीरा राक्षसैस्तैर्महाजवैः ।
उह्यमाना ययुः शीघ्रं महदध्वानमल्पवत् ॥ ९५५
तेऽवतीर्य बहून् देशानुत्तरांश्च कुरूनपि ।
ददृशुर्विविधाश्चर्यं कैलासं पर्वतोत्तमम् ॥ ९५६
तस्याभ्याशे तु ददृशुर्नरनारायणाश्रमम् ॥ ९५७
ददृशुस्तां च बदरीं वृत्तस्कंधां मनोरमाम् ।
स्निग्धामविरलच्छायां श्रिया परमया युताम् ॥ ९५८
तामुपेत्य महात्मानः सह तैर्ब्राह्मणर्षभैः ।
अवतेरुस्ततः सर्वे राक्षसस्कंधतः शनैः ॥ ९५९
ततस्तमाश्रमं रम्यं ददृशुः पाण्डवा नृप ।
तमसा रहितं पुण्यमनामृष्टं रवेः करैः ।
क्षुत्तृट्शीतोष्णदोषैश्च वर्जितं शोकनाशनम् ॥ ९६०
तत्र ते पुरुषव्याघ्राः परमं शौचमास्थिताः ।
षड्रात्रमवसन् वीरा धनंजयदिदृक्षवः ॥ ९६१

१९

ततः किंपुरुषावासं सिद्धचारणसेवितम् ।
ददृशुर्हृष्टरोमाणः पर्वतं गंधमादनम् ॥ ९६२

विविशुः क्रमशो वीराः शरण्यं शुभकाननम् ।
शृण्वंतः प्रीतिजननान् वल्गून् मदकलान् शुभान् ।
श्रोत्ररम्यान् सुमधुरान् शब्दान्खगमुखेरितान् ॥ ९६३
सर्वर्तुफलभाराढ्यान् सर्वर्तुकुसुमोज्वलान् ।
पश्यंतः पादपांश्चापि फलभारावनामितान् ॥ ९६४
सरांसि च मनोज्ञानि समंताज्जलचारिभिः ।
कुमुदैः पुंडरीकैश्च तथा कोकनदोत्पलैः ॥ ९६५
हृष्टैस्तथा तामरसरसासवमदालसैः ।
पद्मोदरच्युतरजःकिंजल्कारुणरंजितैः ॥ ९६६

मंजुस्वरैर्मधुकरैर्विरुतान्कमलाकरान् ।
अपश्यंस्ते नरव्याघ्रा गंधमादनसानुषु ॥ ९६७
तथैव पद्मखंडैश्च मंडितांश्च समंततः ।
शिखंडिनीभिः सहितांल्लतामंडलकेषु च ॥ ९६८
मेघतूर्यरवोद्दाममदनाकुलितान्भृशम् ।
कृत्वैव केकामधुरं संगीतं मधुरस्वरम् ॥ ९६९
चित्रान्कलापान्विस्तीर्य सविलासान्मदालसान् ।
मयूरान्ददृशुर्हृष्टान्नृत्यतो वनलालसान् ॥ ९७०

विवरेषु तरूणां च रुचिरं ददृशुश्च ते ।
सिंधुवारांस्तथोदारान् मन्मथस्येव तोमरान् ॥ ९७१
सुवर्णवर्णकुसुमान् गिरीणां शिखरेषु च ।
कर्णिकारान्विकसितान् कर्णपूरानिवोत्तमान् ॥ ९७२
तथैव वनराजीनामुदारान्रचितानिव ।
विराजमानांस्तेऽपश्यंस्तिलकांस्तिलकानिव ॥ ९७३
कमलोत्पलकह्लारपुंडरीकसुगंधिना ।
सेव्यमाना वने तस्मिन् सुखस्पर्शेन वायुना ॥ ९७४
ततो युधिष्ठिरो भीममाहेदं प्रीतिमद्वचः ।
अहो श्रीमदिदं भीम गंधमादनकाननम् ॥ ९७५

भ्रमरारावमधुरा नलिनीः फुल्लपंकजाः ।

विलोड्यमानाः पश्येमाः करिभिः सकरेणुभिः ॥ ९७६
पश्य भीम शुभान्देशान् देवाक्रीडान्समंततः ।
पत्रिणः पुष्पितानेतान् संपतंति महाद्रुमान् ॥ ९७७
रक्तपीतारुणाः पार्थ पादपाग्रगताः खगाः ।
वदंति मधुरा वाचः सर्वभूतमनोरमाः ॥ ९७८
बहुतालसमुत्सेधाः शैलशृंगपरिच्युताः ।
नानाप्रस्रवणेभ्यश्च वारिधाराः पतंति च ॥ ९७९
शोभयंति महाशैलं नानारजतधातवः ।
क्वचिदंजनवर्णाभाः क्वचित्कांचनसन्निभाः ॥ ९८०
धातवो हरितालस्य क्वचिद्धिंगुलकस्य च ।
मनःशिलागुहाश्चैव संध्याभ्रनिकरोपमाः ॥ ९८१
गंधर्वाः सह कांताभिर्यथोक्तं वृषपर्वणा ।
दृश्यंते शैलशृंगेषु पार्थ किंपुरुषैः सह ॥ ९८२
गीतानां समतालानां तथा साम्नां च निस्वनः ।
श्रूयते बहुधा भीम सर्वभूतमनोहरः ॥ ९८३
महागंगामुदीक्षस्व पुण्यां देवनदीं शुभाम् ।
कलहंसगणैर्जुष्टामृषिकिंनरसेविताम् ॥ ९८४
ते प्रीतमनसः शूराः प्राप्ता गतिमनुत्तमाम् ।
नातृप्यन्पर्वतेंद्रस्य दर्शनेन परंतपाः ॥ ९८५
उपेतमथ माल्यैश्च फलवद्भिश्च पादपैः ।
आर्ष्टिषेणस्य राजर्षेराश्रमं ददृशुस्तदा ॥ ९८६
ततः कदाचिद्धरिसंप्रयुक्तं महेंद्रवाहं सहसोपयातम् ।
विद्युत्प्रभं प्रेक्ष्य महारथानां हर्षोऽर्जुनं चिंतयतां बभूव ॥ ९८७
बभूव तेषां परमप्रहर्षस्तेनाप्रमेयेण समागतानाम् ।
स चापि तान्प्रेक्ष्य किरीटमाली ननंद राजानमभिप्रशंसन् ॥ ९८८

---

## २०

ततो रजन्यां व्युष्टायां धर्मराजं युधिष्ठिरम् ।
भ्रातृभिः सहितः सर्वैरवंदत धनंजयः ।
कृष्णया चैव बीभत्सुर्धर्मपुत्रमपूजयत् ॥ ९८९
अभिवादयमानं तं मूर्ध्न्युपाघ्राय पांडवं ।

हर्षगद्गदया वाचा प्रहृष्टोऽर्जुनमब्रवीत् ॥ ९९०
कथमर्जुन कालोऽयं स्वर्गे व्यतिगतस्तव ।
कथं चास्त्राण्यवाप्तानि देवराजश्च तोषितः ॥ ९९१
अ० उ०—शृणु हंत महाराज विधिना येन दृष्टवान् ।
शतक्रतुमहं देवं भगवंतं च शंकरम् ॥ ९९२
विद्यामधीत्य तां राजंस्त्वयोक्तामरिमर्दन ।
भवता च समादिष्टस्तपसे प्रस्थितो वनम् ॥ ९९३
तपोऽतप्यं महाराज मासं मूलफलाशनः ।
द्वितीयश्चापि मे मासो जलं भक्षयतो गतः ॥ ९९४
निराहारस्तृतीयेऽथ मासे पांडवनंदन ।
ऊर्ध्वबाहुश्चतुर्थं तु मासमस्मि स्थितस्तदा ॥ ९९५
न च मे हीयते प्राणस्तदद्भुतमिवाभवत् ॥ ९९६
पंचमे त्वथ संप्राप्ते प्रथमे दिवसे गते ।
वराहसंस्थितं भूतं मत्समीपं समागतम् ॥ ९९७
निघ्नन्प्रोथेन पृथिवीं विलिखंश्चरणैरपि ।
संमार्जन् जठरेणोर्वीं विवर्तंश्च मुहुर्मुहुः ॥ ९९८
अनु तस्यापरं भूतं महत्कैरातसंस्थितम् ।
धनुर्बाणासिमत् प्राप्तं स्त्रीगणानुगतं तदा ॥ ९९९
ततोऽहं धनुरादाय तथाक्षय्ये महेषुधी ।
अताडयं शरेणाथ तद्भूतं लोमहर्षणम् ॥ १०००
युगपत्तं किरातस्तु विकृष्य बलवद्धनुः ।
अभ्याजघ्ने दृढतरं कंपयन्निव मे मनः ॥ १००१
स तु मामब्रवीद्राजन् मम पूर्वपरिग्रहः ।
मृगयाधर्ममुत्सृज्य किमर्थं ताडितस्त्वया ।
एष ते निशितैर्बाणैर्दर्पं हन्मि स्थिरो भव ॥ १००२
ततो गिरिमिवात्यर्थमावृणोन्मां महाशरैः ।
तं चाहं शरवर्षेण महता समवाकिरम् ॥ १००३
ततः शरैर्दीप्तमुखैर्यंत्रितैरनुमंत्रितैः ।
प्रत्यविध्यमहं तं तु वज्रैरिव शिलोच्चयम् ॥ १००४
तस्य तच्छतधा रूपमभवच्च सहस्रधा ।
तानि चास्य शरीराणि शरैरहमताडयम् ॥ १००५

यदाभिभवितुं बाणैर्न च शक्नोमि तं रणे ।
ततो महास्त्रमातिष्ठं वायव्यं भरतर्षभ ॥ १००६
न चैनमशकं हंतुं तदद्भुतमिवाऽभवत् ।
तस्मिन्प्रतिहते चास्त्रे विस्मयो मे महानभूत् ॥ १००७
भूय एव महाराज सविशेषमहं ततः ।
अस्त्रपूगेन महता रणे भूतमवाकिरम् ॥ १००८
स्थूणाकर्णमथो जालं शरवर्षमथोल्बणम् ।
शलभास्त्रमश्मवर्षं समास्थायाहमभ्ययाम् ॥ १००९
जग्रास प्रसभं तानि सर्वाण्यस्त्राणि मे नृप ।
तेषु सर्वेषु जग्धेषु ब्रह्मास्त्रमहमादिशम् ॥ १०१०
तदप्यस्त्रं महातेजाः क्षणेनैव व्यशातयत् ।
ब्रह्मास्त्रे तु हते राजन्भयं मां महदाविशत् ॥ १०११
हतेष्वस्त्रेषु सर्वेषु भक्षितेष्वायुधेषु च ।
मम तस्य च भूतस्य बाहुयुद्धमवर्तत ॥ १०१२
व्यायामं मुष्टिभिः कृत्वा तलैरपि समागतैः ।
अपारयंश्च तद्भूतं निश्चेष्टमगमं महीम् ॥ १०१३
ततः प्रहस्य तद्भूतं तत्रैवांतरधीयत ।
सह स्त्रीभिर्महाराज पश्यतो मेऽद्भुतोपमम् ॥ १०१४
एवं कृत्वा स भगवांस्ततोऽन्यद्रूपमास्थितः ।
दिव्यमेव महाराज वसानोऽद्भुतमंबरम् ॥ १०१५
हित्वा किरातरूपं च भगवांस्त्रिदशेश्वरः ।
स्वरूपं दिव्यमास्थाय तस्थौ तत्र महेश्वरः ।
उमासहायो व्यालधृग्बहुरूपः पिनाकधृक् ॥ १०१६
स मामभ्येत्य समरे तथैवाभिमुखं स्थितम् ।
शूलपाणिरथोवाच तुष्टोऽस्मीति परंतप ॥ १०१७
प्रणम्य मनसा शर्वं ततो वचनमाददे ।
अस्त्राणीच्छाम्यहं ज्ञातुं यानि देवेषु कानिचित् ॥ १०१८
ददानीत्येव भगवानब्रवीत्र्यंबकश्च माम् ।
प्रददौ च मम प्रीतः सोऽस्त्रं पाशुपतं महत् ॥ १०१९
उवाच च महादेवो दत्वा मेऽस्त्रं सनातनम् ।

न प्रयोज्यं भवेदेतन्मानुषेषु कथंचन ॥ १०२०
जगद्विनिर्दहेदेवमल्पतेजसि पातितम् ।
पीड्यमानेन बलवत्प्रयोज्यं स्याद्धनंजय ॥ १०२१
तदप्रतिहतं दिव्यं सर्वास्त्रप्रतिषेधनम् ।
मूर्तिमन्मे स्थितं पार्श्वे प्रसन्ने गोवृषध्वजे ॥ १०२२
उत्सादनममित्राणां परसेनानिकर्तनम् ।
दुरासदं दुष्प्रसहं सुरदानवराक्षसैः ॥ १०२३
अनुज्ञातस्त्वहं तेन तत्रैव समुपाविशम् ।
प्रेक्षतश्चैव मे देवस्तत्रैवांतरधीयत ॥ १०२४
ततो मरुत्वान् हरिभिर्युक्तैर्वाहैः स्वलंकृतैः ।
शचीसहायस्तत्रायात्सह सर्वैस्तदामरैः ॥ १०२५
एतस्मिन्नेव काले तु कुबेरो नरवाहनः ।
दर्शयामास मां राजन् लक्ष्म्या परमया युतः ॥ १०२६
दक्षिणस्यां दिशि यमं प्रत्यपश्यं व्यवस्थितम् ।
वरुणं देवराजं च यथास्थानमवस्थितम् ॥ १०२७
ते मामूचुर्महाराज सांत्वयित्वा नरर्षभ ।
सव्यसाचिन्निरीक्षास्माँल्लोकपालानवस्थितान् ॥ १०२८
सुरकार्यार्थसिद्ध्यर्थं दृष्टवानसि शंकरम् ।
अस्मत्तोऽपि गृहाण त्वमस्त्राणीति समंततः ॥ १०२९
ततोऽहं प्रयतो भूत्वा प्रणिपत्य सुरर्षभान् ।
प्रत्यगृह्णं तदास्त्राणि महान्ति विधिवद्विभो ॥ १०३०
मघवानपि देवेशो रथमारुह्य सुप्रभम् ।
उवाच भगवान् स्वर्गं गंतव्यं फाल्गुन त्वया ॥ १०३१
त्वया हि तीर्थेषु पुरा समाप्लावः कृतोऽसकृत् ।
तपश्चेदं महत्तप्तं स्वर्गं गंतासि पांडव ॥ १०३२
मातलिर्मन्नियोगात्त्वां त्रिदिवं प्रापयिष्यति ।
विदितस्त्वं हि देवानां मुनीनां च महात्मनाम् ॥ १०३३
अथापश्यं हरियुजं रथमैंद्रमुपस्थितम् ।
दिव्यं मायामयं पुण्यं यत्र मातलिना नृप ॥ १०३४
लोकपालेषु यातेषु मामुवाचाथ मातलिः ।

द्रष्टुमिच्छति शक्रस्त्वां देवराजो महाद्युते ॥ १०३५
ततः शक्रस्य भवनमपश्यममरावतीम् ।
दिव्यैः कामफलैर्वृक्षै रत्नैश्च समलंकृताम् ॥ १०३६
न तत्र सूर्यस्तपति न शीतोष्णे न च क्लमः ।
न बाधते तत्र रजस्तत्रास्ति न जरा नृप ॥ १०३७
न तत्र शोको दैन्यं वा दौर्बल्यं चोपलक्ष्यते ।
न क्रोधलोभौ तत्रास्तां सुरादीनां विशांपते ॥ १०३८
नित्यपुष्पफलास्तत्र पादपा हरितच्छदाः ।
पुष्करिण्यश्च विविधाः पद्मसौगंधिकायुताः ॥ १०३९
शीतस्तत्र ववौ वायुः सुगंधी जीवनः शुचिः ।
सर्वरत्नविचित्रा च भूमिः पुष्पविभूषिता ॥ १०४०
विमानगामिनश्चात्र दृश्यंते बहवोऽम्बरे ॥ १०४१
ततोऽपश्यं वसून्रुद्रान् साध्यांश्च समरुद्गणान् ।
आदित्यानश्विनौ चैव तान्सर्वान्प्रत्यपूजयम् ॥ १०४२
प्रविश्य तां पुरीं दिव्यां देवगंधर्वपूजिताम् ।
देवराजं सहस्राक्षमुपातिष्ठं कृतांजलिः ।
ददावर्धासनं प्रीतः शक्रो मे ददतां वरः ॥ १०४३
तत्राहं देवगंधर्वैः सहितो भूरिदक्षिणैः ।
अस्त्रार्थमवसं स्वर्गे शिक्षाणोऽस्त्राणि भारत ॥ १०४४
तिस्रः कोट्य समाख्याता दानवाः शक्रशात्रवः ।
निवातकवचा घोरास्तैर्मया विनिपातिताः ॥ १०४५
इदं च मे तनुत्राणं प्रायच्छन्मघवा प्रभुः ।
अभेद्यं कवचं दिव्यं स्रजं चैव हिरण्मयीम् ॥ १०४६
देवदत्तं च मे शंखं पुनः प्रादान्महारवम् ।
दिव्यं चेदं किरीटं मे स्वयमिंद्रो युयोज ह ॥ १०४७
एवं संपूजितस्तत्र सुखमस्म्युषितो नृप ।
इंद्रस्य भवने पुण्ये गंधर्वशिशुभिः सह ॥ १०४८
ततो मामब्रवीच्छक्रः प्रीतिमानमरैः सह ।
समयोऽर्जुन गंतुं ते भ्रातरो हि स्मरंति ते ॥ १०४९
एवमिंद्रस्य भवने पंच वर्षाणि भारत ।

उषितानि मया राजन् स्मरता द्यूतजं कलिम् ॥ १०५०
ततो भवंतमद्राक्षं भ्रातृभिः परिवारितम् ।
गंधमादनपादस्य पर्वतस्यास्य मूर्धनि ॥ १०५१
यु० उ० —दिष्ट्या धनंजयास्त्राणि त्वया प्राप्तानि भारत ।
दिष्ट्या चाराधितो राजा देवानामीश्वरः प्रभुः ॥ १०५२
दिष्ट्या च भगवान्स्थाणुर्देव्या सह परंतप ।
साक्षाद्दृष्टः स्वयुद्धेन तोषितश्च त्वयानघ ॥ १०५३
दिष्ट्या च लोकपालैस्त्वं समेतो भरतर्षभ ।
दिष्ट्या वर्द्धामहे पार्थ दिष्ट्यासि पुनरागतः ॥ १०५४
अद्य कृत्स्नां महीं देवीं विजितां पुरमालिनीम् ।
मन्ये च धृतराष्ट्रस्य पुत्रानपि वशीकृतान् ॥ १०५५

---

## २१.

बह्वाश्चर्ये वने तेषां वसतामुग्रधन्वनाम् ।
प्राप्तानामाश्रमं राजन् राजर्षेर्वृषपर्वणः ॥ १०५६
यदृच्छया धनुष्पाणिर्बद्धखड्गो वृकोदरः ।
ददर्श तद्वनं रम्यं देवगंधर्वसेवितम् ॥ १०५७
स तत्र मनुजव्याघ्रो वने वनचरोपमः ।
पद्भ्यामपि समापेदे भीमसेनो महाबलः ॥ १०५८
स ददर्श महाकायं भुजंगं लोमहर्षणम् ।
गिरिदुर्गे समापन्नं कायेनावृत्य कंदरम् ॥ १०५९
पर्वताभोगवर्ष्माणमतिकायं महाबलम् ।
चित्रांगमंगजैश्चित्रैर्हरिद्रासदृशाच्छविम् ॥ १०६०
गुहाकारेण वक्त्रेण चतुर्दंष्ट्रेण राजता ।
दीप्ताक्षेणातिताम्रेण लिहानं सृक्किणी मुहुः ॥ १०६१
त्रासनं सर्वभूतानां कालांतकयमोपमम् ।
निःश्वासक्ष्वेडनादेन भर्त्सयंतमिव स्थितम् ॥ १०६२
स भीमं सहसाऽभ्येत्य पृदाकुः कुपितो भृशम् ।
जग्राहाजगरो ग्राहो भुजयोरुभयोर्बलात् ॥ १०६३
तेन संस्पृष्टगात्रस्य भीमसेनस्य वै तदा ।
संज्ञा मुमोह सहसा वरदानेन तस्य हि ॥ १०६४
विस्फुरन्शनकैर्भीमो न शशाक विचेष्टितुम् ।

नागायुतसमप्राणः सिंहस्कंधो महाभुजः ॥ १०६५
निगृह्यैनं महाबाहुं ततः स भुजगस्तदा ।
विमुच्यास्य भुजौ पीनाविदं वचनमब्रवीत् ॥ १०६६
दिष्टस्त्वं क्षुधितस्याद्य देवैर्भक्ष्यो महाभुज ।
दिष्ट्या कालस्य महतः प्रियाः प्राणा हि देहिनाम् ॥ १०६७
नहुषो नाम राजर्षिर्व्यक्तं ते श्रोत्रमागतः ।
तवैव पूर्वः पूर्वेषामायोर्वंशधरः सुतः ॥ १०६८
सोऽहं शापादगस्त्यस्य ब्राह्मणानवमन्य च ।
इमामवस्थामापन्नः पश्य दैवमिदं मम ॥ १०६९
न हि मे मुच्यते कश्चित्कथंचित्प्रग्रहं गतः ।
गजो वा महिषो वापि षष्ठे काले नरोत्तम ॥ १०७०
तमुवाच महाबाहुर्भीमसेनो भुजंगमम् ।
न च कुप्ये महासर्प न चात्मानं विगर्हये ॥ १०७१
दैवं पुरुषकारेण को वंचयितुमर्हति ।
दैवमेव परं मन्ये पुरुषार्थो निरर्थकः ॥ १०७२
किं तु नाद्यानुशोचामि तथात्मानं विनाशितम् ।
यथा तु विपिने न्यस्तान्भ्रातॄन्राज्यपरिच्युतान् ॥ १०७३
विनष्टमथ मां श्रुत्वा भविष्यंति निरुद्यमाः ।
मातरं चैव शोचामि कृपणां पुत्रगृद्धिनीम् ॥ १०७४
एवंविधं बहु तदा विललाप वृकोदरः ।
भुजंगभोगसंरुद्धो नाशकच्च विचेष्टितुम् ॥ १०७५
युधिष्ठिरस्तु कौंतेयो बभूवास्वस्थचेतनः ।
अनिष्टदर्शनान्घोरानुत्पातान्परिचिंतयन् ॥ १०७६
धर्मराजोऽपि मेधावी मन्यमानो महद्भयम् ।
द्रौपदीं परिपप्रच्छ क्व भीम इति भारत ॥ १०७७
शशंस तस्मै पांचाली चिरयातं वृकोदरम् ॥ १०७८
स प्राचीं दिशमास्थाय महतो गजयूथपान् ।
ददर्श पृथिवीं चिह्नैर्भीमस्य परिचिह्निताम् ॥ १०७९
स गत्वा तैस्तदा चिह्नैर्ददर्श गिरिगह्वरे ।
ईरिणे निर्जले देशे कंटकिद्रुमसंकुले ।

गृहीतं भुजगेंद्रेण निश्चेष्टमनुजं तदा ॥ १०८०

भी० उ०—अयमार्य महासत्वो भक्ष्यार्थं मां गृहीतवान् ।
नहुषो नाम राजर्षिः प्राणवानिव संस्थितः ॥ १०८१

यु० उ०—मुच्यतामयमायुष्मन् भ्राता मेऽमितविक्रमः ।
वयमाहारमन्यं ते दास्यामः क्षुन्निवारणम् ॥ १०८२

अ० उ०—व्रतमेतन्महाबाहो विषयं मम यो व्रजेत् ।
स मे भक्ष्यो भवेत्तात त्वं चापि विषये मम ॥ १०८३
प्रश्नानुच्चरितानद्य व्याहरिष्यसि चेन्मम ।
अथ पश्चाद्विमोक्ष्यामि भ्रातरं ते वृकोदरम् ॥ १०८४

यु० उ०—ब्रूहि सर्प यथाकामं प्रतिवक्ष्यामि ते वचः ।
अपि चेच्छक्नुयां प्रीतिमाहर्तुं ते भुजंगम ॥ १०८५

अ० उ०—ब्राह्मणः को भवेद्राजन् वेद्यं किं च युधिष्ठिर ।
ब्रवीह्यतिमतिं त्वां हि वाक्यैरनुमिमीमहे ॥ १०८६

यु० उ०—सत्यं दानं क्षमा शीलमानृशंस्यं तपो घृणा ।
दृश्यंते यत्र नागेंद्र स ब्राह्मण इति स्मृतिः ॥ १०८७
वेद्यं सर्प परं ब्रह्म निर्दुःखमसुखं च यत् ।
यत्र गत्वा न शोचंति भवतः किं विवक्षितम् ॥ १०८८

अ० उ०—चातुर्वर्ण्यं प्रमाणं च सत्यं च ब्रह्म चैव हि ॥ १०८९
शूद्रेष्वपि च सत्यं च दानमक्रोध एव च ।
आनृशंस्यमहिंसा च घृणा चैव युधिष्ठिर ॥ १०९०
वेद्यं यच्चात्र निर्दुःखमसुखं च नराधिप ।
ताभ्यां हीनं पदं चान्यन्न तदस्तीति लक्षये ॥ १०९१

यु० उ०—शूद्रे तु यद्भवेल्लक्ष्म द्विजे तच्च न विद्यते ।
न वै शूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मणः ॥ १०९२
यत्रैतल्लक्ष्यते सर्प वृत्तं स ब्राह्मणः स्मृतः ।
यत्रैतन्न भवेत्सर्प तं शूद्रमिति निर्दिशेत् ॥ १०९३
यत्पुनर्भवता प्रोक्तं न वेद्यं विद्यतीति च ।
ताभ्यां हीनमतोऽन्यत्र पदं नास्तीति चेदपि ॥ १०९४
एवमेतन्मतं सर्प ताभ्यां हीनं न विद्यते ।
यथा शीतोष्णयोर्मध्ये भवेन्नोष्णं न शीतता ॥ १०९५

एवं वै सुखदुःखाभ्यां हीनं नास्ति पदं क्वचित् ।
एषा मम मतिः सर्प यथा वा मन्यते भवान् ॥ १०९६

अ० उ०—यदि ते वृत्ततो राजन्ब्राह्मणः प्रसमीक्षितः ।
वृथा जातिस्तदायुष्मन्कृतिर्यावन्न विद्यते ॥ १०९७

यु० उ०—जातिरत्र महासर्प मनुष्यत्वे महामते ।
संकरात्सर्ववर्णानां दुष्परीक्ष्येति मे मतिः ॥ १०९८

सर्वे सर्वास्वपत्यानि जनयंति सदा नराः ।
वाङ्मैथुनमथो जन्म मरणं च समं नृणाम् ॥ १०९९

इदमार्षं प्रमाणं च ये यजामह इत्यपि ।
तस्माच्छीलं प्रधानेष्टं विदुर्ये तत्त्वदर्शिनः ॥ ११००

प्राङ्नाभिवर्धनात्पुंसो जातकर्म विधीयते ।
तत्रास्य माता सावित्री पिता त्वाचार्य उच्यते ॥ ११०१

तावच्छूद्रसमो ह्येष यावद्वेदे न जायते ।
तस्मिन्नेवं मतिद्वैधे मनुः स्वायंभुवोऽब्रवीत् ॥ ११०२

कृतकृत्याः पुनर्वर्णा यदि वृत्तं न विद्यते ।
संकरस्तत्र नागेंद्र बलवान्प्रसमीक्षितः ॥ ११०३

यत्रेदानीं महासर्प संस्कृतं वृत्तमिष्यते ।
तं ब्राह्मणमहं पूर्वमुक्तवान्भुजगोत्तम ॥ ११०४

अ० उ०—श्रुतं विदितवेद्यस्य तव वाक्यं युधिष्ठिर ।
भक्षयेयमहं कस्माद्भ्रातरं ते वृकोदरम् ॥ ११०५

यु० उ०—भवानेतादृशो लोके वेदवेदांगपारगः ।
ब्रूहि किं कुर्वतः कर्म भवेद्गतिरनुत्तमा ॥ ११०६

अ० उ०—पात्रे दत्वा प्रियाण्युक्त्वा सत्यमुक्त्वा च भारत ।
अहिंसानिरतः स्वर्गं गच्छेदिति मतिर्मम ॥ ११०७

तिस्रो वै गतयो राजन् परिदिष्टाः स्वकर्मभिः ।
मानुष्यं स्वर्गवासश्च तिर्यग्योनिश्च तत्त्रिधा ॥ ११०८

तत्र वै मानुषाल्लोकाद्दानादिभिरतंद्रितः ।
अहिंसार्थसमायुक्तैः कारणैः स्वर्गमश्नुते ॥ ११०९

कामक्रोधसमायुक्तो हिंसालोभसमन्वितः ।
मनुष्यत्वात्परिभ्रष्टस्तिर्यग्योनौ प्रसूयते ॥ १११०

तिर्यग्योन्याः पृथग्भावो मनुष्यार्थे विधीयते ।
गवादिभ्यस्तथाऽश्वेभ्यो देवत्वमपि दृश्यते ॥ ११११

सोऽयमेता गतीस्तात जंतुश्चरति कार्यवान् ।
नित्ये महति चात्मानमवस्थापयते द्विजः ॥ १११२

जातो जातश्च बलवान् भुंक्ते चात्मा सदेहवान् ।
फलार्थस्तात निष्पृक्तः प्रजालक्षणभावनः ॥ १११३

यु॰ उ॰—मनसश्चापि बुद्धेश्च ब्रूहि मे लक्षणं परम् ।
एतदध्यात्मविदुषां परं कार्यं विधीयते ॥ १११४

अ॰ उ॰—बुद्धिरात्मानुगातीव उत्पातेन विधीयते ।
तदाश्रिता हि सा ज्ञेया बुद्धिस्तस्यैषिणी भवेत् ॥ १११५

बुद्धिरुत्पद्यते कार्यान्मनस्तूत्पन्नमेव हि ।
बुद्धेर्गुणविधिर्नास्ति मनस्तद्गुणवद्भवेत् ॥ १११६

यु॰ उ॰—अहो बुद्धिमतां श्रेष्ठ शुभा बुद्धिरियं तव ।
विदितं वेदितव्यं ते कस्मान्मामनुपृच्छसि ॥ १११७

सर्वज्ञं त्वां कथं मोह आविशत्स्वर्गवासिनम् ।
अ॰ उ॰—सुप्रज्ञमपि चेच्छूरमृद्धिर्मोहयते नरम् ॥ १११८

वर्तमानः सुखे सर्वो मुह्यतीति मतिर्मम ।
सोऽहमैश्वर्यमोहेन मदाविष्टो युधिष्ठिर ॥ १११९

पतितः प्रतिसंबुद्धस्त्वां तु संबोधयाम्यहम् ।
ब्रह्मर्षीणां सहस्रं हि उवाह शिबिकां मम ॥ ११२०

तत्र ह्यगस्त्यः पादेन वहन् स्पृष्टो मया मुनिः ।
अगस्त्येन ततोऽस्म्युक्तो ध्वंस सर्पेति वै रुषा ॥ ११२१

ततः स मामुवाचेदं प्रपतंतं कृपान्वितः ।
युधिष्ठिरो धर्मराजः शापात्त्वां मोक्षयिष्यति ॥ ११२२

ततो मे विस्मयो जातस्तद्दृष्ट्वा तपसो बलम् ।
ब्रह्म च ब्राह्मणत्वं च येन त्वाऽहमचूचुदम् ॥ ११२३

सत्यं दमस्तपो दानमहिंसा धर्मनित्यता ।
साधकानि सदा पुंसां न जातिर्न कुलं नृप ॥ ११२४

अरिष्ट एष ते भ्राता भीमसेनो महाबलः ।
स्वस्ति तेऽस्तु महाराज गमिष्यामि दिवं पुनः ॥ ११२५



इत्युक्त्वाऽजगरं देहं मुक्त्वा स नहुषो नृपः।
दिव्यं वपुः समास्थाय गतस्त्रिदिवमेव ह ॥ ११२६

युधिष्ठिरोऽपि धर्मात्मा भ्रात्रा भीमेन संगतः।
धौम्येन सहितः श्रीमानाश्रमं पुनरागमत् ॥ ११२७

ते वै मुमुदिरे वीराः प्रसन्नसलिलां शिवाम्।
पश्यंतो दृढधन्वानः परिपूर्णां सरस्वतीम् ॥ ११२८

तेषां पुण्यतमा रात्रिः पर्वसंधौ स्म शारदी।
तत्रैव वसतामासीत् कार्तिकी जनमेजय ॥ ११२९

तमिस्राभ्युदये तस्मिन् धौम्येन सह पांडवाः।
सूतैः पौरोगवैश्चैव काम्यकं प्रययुर्वनम् ॥ ११३०

---

## २२

ततस्ते पांडवाः शीघ्रं प्रययुर्धर्मकोविदाः।
ब्राह्मणैः सहिता राजन् ये च तत्र सहोषिताः।
इंद्रसेनादिभिश्चैव प्रेष्यैरनुगतास्तदा ॥ ११३१

ते यात्वाऽनुसृतैर्मार्गैः स्वन्नैः शुचिजलान्वितैः।
ददृशुः काम्यकं पुण्यमाश्रमं तपसा युतम् ॥ ११३२

पांडवा मृगयाशीलाश्चरंतस्तन्महद्वनम्।
विजह्रुरिंद्रप्रतिमाः कंचित्कालमरिंदम ॥ ११३३

ततस्ते यौगपद्येन युयुः सर्वे चतुर्दिशम्।
मृगयां पुरुषव्याघ्रा ब्राह्मणार्थे परंतपाः ॥ ११३४

द्रौपदीमाश्रमे न्यस्य तृणबिंदोरनुज्ञया।
महर्षेर्दीप्ततपसो धौम्यस्य च पुरोधसः ॥ ११३५

ततस्तु राजा सिंधूनां वार्द्धक्षत्रिर्महायशाः।
विवाहकामः शाल्वेयान् प्रयातः सोऽभवत्तदा ॥ ११३६

तत्रापश्यत् प्रियां भार्यां पांडवानां यशस्विनीम्।
तिष्ठंतीमाश्रमद्वारि द्रौपदीं निर्जने वने ॥ ११३७

विभ्राजमानां वपुषा बिभ्रन्तीं रूपमुत्तमम्।
भ्राजयन्तीं वनोद्देशं नीलाभ्रमिव विद्युतम् ॥ ११३८

ततः स राजा सिंधूनां वार्द्धक्षत्रिर्जयद्रथः।

विस्मितस्त्वनवद्यांगीं दृष्ट्वा तां दुष्टमानसः ॥ ११३९
स कोटिकास्यं राजानमब्रवीत् काममोहितः ।
कस्य त्वेषानवद्यांगी यदि वाऽपि न मानुषी ॥ ११४०
एतां दृष्ट्वा स्त्रियो मेऽन्या यथा शाखामृगस्त्रियः ।
प्रतिभांति महाबाहो सत्यमेतद् ब्रवीमि ते ॥ ११४१
तां समाचक्ष्व कल्याणीं यदि स्याच्छैब्य मानुषी ॥ ११४२
को० उ०—एषा वै द्रौपदी कृष्णा राजपुत्री यशस्विनी ।
पंचानां पांडुपुत्राणां महिषी संमता भृशम् ॥ ११४३
एवमुक्तः प्रत्युवाच पश्यामि द्रौपदीमिति ।
पतिः सौवीरसिंधूनां दुष्टभावो जयद्रथः ॥ ११४४
स प्रविश्याश्रमं पुण्यं सिंहगोष्ठं वृको यथा ।
आत्मना सप्तमः कृष्णामिदं वचनमब्रवीत् ॥ ११४५
कुशलं ते वरारोहे भर्तारस्तेऽप्यनामयाः ।
येषां कुशलकामाऽसि तेऽपि कच्चिदनामयाः ॥ ११४६
द्रौ० उ०—अपि ते कुशलं राज्ये राष्ट्रे कोषे बले तथा ।
कौरव्यः कुशली राजा कुंतीपुत्रो युधिष्ठिरः ॥ ११४७
पाद्यं प्रतिगृहाणेदमासनं च नृपात्मज ।
मृगान् पंचशतं चैव प्रातराशं ददानि ते ॥ ११४८
ऐणेयान् पृषतान् न्यंकून् हरिणांश्छरभांश्छशान् ।
प्रदास्यति स्वयं तुभ्यं कुंतीपुत्रो युधिष्ठिरः ॥ ११४९
ज० उ०—कुशलं प्रातराशस्य सर्वं मे दित्सितं त्वया ।
एहि मे रथमारोह सुखमाप्नुहि केवलम् ॥ ११५०
गतश्रीकान् हृतराज्यान् कृपणान् गतचेतसः ।
अरण्यवासिनः पार्थान्नानुरोद्धुं त्वमर्हसि ॥ ११५१
श्रिया विहीना राष्ट्राच्च विनष्टाः शाश्वतीः समाः ।
अलं ते पांडुपुत्राणां भक्त्या क्लेशमुपासितुम् ॥ ११५२
भार्या मे भव सुश्रोणि त्यजैनान्सुखमाप्नुहि ।
अखिलान् सिंधुसौवीरानाप्नुहि त्वं मया सह ॥ ११५३
इत्युक्त्वा सिंधुराजेन वाक्यं हृदयकंपनम् ।
कृष्णा तस्मादपाक्रामद्देशात्सभ्रूकुटीमुखी ॥ ११५४

अवमत्यास्य तद्वाक्यमाक्षिप्य च सुमध्यमा ।
मैवमित्यब्रवीत्कृष्णा लज्जस्वेति च सैंधवम् ॥ ११५५

साताननुप्रेक्ष्य विशालनेत्रा जिघृक्षमाणानवभर्त्सयंती ।
प्रोवाच मा मा स्पृशतेति भीता धौम्यं प्रचुक्रोश पुरोहितं सा ॥ ११५६
जग्राह तामुत्तरवस्त्रदेशे जयद्रथस्तं समवाक्षिपत्सा ।
तया समाक्षिप्ततनुः स पापः पपात शाखीव निकृत्तमूलः ॥ ११५७
प्रगृह्यमाणा तु महाजवेन मुहुर्विनिश्वस्य च राजपुत्री ।
सा कृष्यमाणा रथमारुरोह धौम्यस्य पादावभिवाद्य कृष्णा ॥ ११५८
ततो दिशः संप्रविहृत्य पार्था मृगान्वराहान्महिषांश्च हत्वा ।
धनुर्धराः श्रेष्ठतमाः पृथिव्यां पृथक् चरंतः सहिता बभूवुः ॥ ११५९
भ्रातॄंश्च तानभ्यवदद्युधिष्ठिरः श्रुत्वा गिरो व्याहरतां मृगाणाम् ।
क्षिप्रं निवर्तध्वमलं मृगैर्नो मनो हि मे दूयति दह्यते च ॥ ११६०
सरः सुपर्णेन हृतोरगं यथा राष्ट्रं यथाऽराजकमात्तलक्ष्मि ।
एवंविधं मे प्रतिभाति काम्यकं शौंडैर्यथा पीतरसश्च कुंभः ॥ ११६१
ते सैंधवैरत्यनिलोग्रवेगैर्महाजवैर्वाजिभिरुह्यमानाः ।
युक्तैर्बृहद्भिः सुरथैर्नृवीरास्तदाश्रमायाभिमुखा बभूवुः ॥ ११६२
इत्येव ते तद्वनमाविशंतो महत्यरण्ये मृगयां चरित्वा ।
बालामपश्यंत तदा रुदंतीं धात्रेयिकां प्रेष्यवधूं प्रियायाः ॥ ११६३
अथाब्रवीच्चारुमुखं विमृष्य धात्रेयिका सारथिमिंद्रसेनम् ।
जयद्रथेनापहृता प्रमथ्य पंचेंद्रकल्पान्परिभूय कृष्णा ॥ ११६४
तिष्ठंति वर्त्मानि नवान्यमूनि वृक्षाश्च न म्लांति तथैव भग्नाः ।
गृह्णीत चापानि महाधनानि शरांश्च शीघ्रं पदवीं चरध्वम् ॥ ११६५
पुरा हि निर्भर्त्सनदण्डमोहिता प्रमोहचित्ता वदनेन शुष्यता ।
ददाति कस्मैचिदनर्हते तनुं वराज्यपूर्णामिव भस्मनि स्रुचम् ॥ ११६६
मा वः प्रियायाः सुनसं सुलोचनं चंद्रप्रभाच्छं वदनं प्रसन्नम् ।
स्पृश्याच्छुभं कश्चिदकृत्यकारी श्वा वै पुरोडाशमिवाध्वरस्थम् ॥ ११६७
यु० उ०—भद्रे प्रतिक्राम नियच्छ वाचं मास्मत्सकाशे पुरुषाण्यवोचः ।
एतावदुक्त्वा प्रययुर्हि शीघ्रं तान्येव वर्त्मान्यनुवर्तमानाः ॥ ११६८
मुहुर्मुहुर्व्यालवदुच्छ्वसंतो ज्यां विक्षिपंतश्च महाधनुर्भ्यः ।
ततोऽपश्यंस्तस्य सैन्यस्य रेणुमुद्धूतं वै वाजिखुरप्रणुन्नम् ॥ ११६९

पदातीनां मध्यगतं च धौम्यं विक्रोशंतं भीममभिद्रवेति ।
ते सांत्व्य धौम्यं परिदीनसत्वाः सुखं भवानेत्विति राजपुत्राः ।
श्येना यथैवामिषसंप्रयुक्ता जवेन तत्सैन्यमथाभ्यधावन् ॥ ११७०

तेषां महेंद्रोपमविक्रमाणां संरब्धानां धर्षणाद्याज्ञसेन्याः ।
क्रोधः प्रजज्वाल जयद्रथं च दृष्ट्वा प्रियां तस्य रथे स्थितां च ॥ ११७१

प्रचक्रुशुश्चाप्यथ सिंधुराजं वृकोदरश्चैव धनंजयश्च ।
यमौ च राजा च महाधनुर्धरास्ततो दिशः संमुमुहुः परेषाम् ॥ ११७२

ततो घोरतमः शब्दो रणे समभवत्तदा ।
भीमार्जुनयमान्दृष्ट्वा सैन्यानां सयुधिष्ठिरान् ।
शिबिसौवीरसिंधूनां विषादश्चाप्यजायत ॥ ११७३

गजं तु सगजारोहं पदातींश्च चतुर्दश ।
जघान गदया भीमः सैंधवध्वजिनीमुखे ॥ ११७४

पार्थः पंचशतांश्छूरान्पार्वतीयान्महारथान् ।
परीप्समानः सौवीरं जघान ध्वजिनीमुखे ॥ ११७५

राजा स्वयं सुवीराणां प्रवराणां प्रहारिणाम् ।
निमेषमात्रेण शतं जघान समरे तदा ॥ ११७६

ददृशे नकुलस्तत्र रथात्प्रस्कंद्य खड्गधृक् ।
शिरांसि पादरक्षाणां बीजवत्प्रवपन्मुहुः ॥ ११७७

सहदेवस्तु संधाय रथेन गजयोधिनः ।
पातयामास नाराचैर्द्रुमेभ्य इव बर्हिणः ॥ ११७८

द्वादशानां तु सर्वेषां सौवीराणां धनंजयः ।
चकर्त निशितैर्भल्लैर्धनूंषि च शिरांसि च ॥ ११७९

प्रच्छाद्य पृथिवीं तस्थुः सर्वमायोधनं प्रति ।
शरीराण्यशिरस्कानि विदेहानि शिरांसि च ॥ ११८०

हतेषु तेषु वीरेषु सिंधुराजो जयद्रथः ।
विमुच्य कृष्णां संत्रस्तः पलायनमनाऽभवत् ॥ ११८१

स तस्मिन्संकुले सैन्ये द्रौपदीमवतार्य ताम् ।
प्राणप्रेप्सुरुपाधावद्वनं येन नराधमः ॥ ११८२

द्रौपदीं धर्मराजस्तु दृष्ट्वा धौम्यपुरस्कृताम् ।
माद्रीपुत्रेण वीरेण रथमारोपयत्तदा ॥ ११८३

भी॰ उ॰—हतप्रवीरा रिपवो भूयिष्ठं विद्रुता दिशः ।
गृहीत्वा द्रौपदीं राजन्निवर्ततु भवानितः ॥ ११८४
यमाभ्यां सह राजेंद्र धौम्येन च महात्मना ।
प्राप्याश्रमपदं राजन् द्रौपदीं परिसांत्वय ॥ ११८५
न हि मे मोक्ष्यते जीवन् मूढः सैंधवको नृपः ।
पातालतलसंस्थोऽपि यदि शक्रोऽस्य सारथिः ॥ ११८६
यु॰ उ॰—न हंतव्यो महाबाहो दुरात्माऽपि स सैंधवः ।
दुःशलामभिसंस्मृत्य गांधारीं च यशस्विनीम् ॥ ११८७
तच्छ्रुत्वा द्रौपदी भीममुवाच व्याकुलेंद्रिया ।
कुपिता ह्रीमती प्राज्ञा पती भीमार्जुनावुभौ ॥ ११८८
कर्तव्यं चेत्प्रियं मह्यं वध्यः स पुरुषाधमः ।
सैंधवापसदः पापो दुर्मतिः कुलपांसनः ॥ ११८९
इत्युक्तौ तौ नरव्याघ्रौ ययतुर्यत्र सैंधवः ।
राजा निववृते कृष्णामादाय सपुरोहितः ॥ ११९०
स प्रविश्याश्रमपदं व्यपविद्धबृसीमठम् ।
मार्कंडेयादिभिर्विप्रैरनुकीर्णं ददर्श ह ॥ ११९१
ते स्म तं मुदिता दृष्ट्वा पुनः प्रत्यागतं नृपम् ।
जित्वा तान् सिंधुसौवीरान् द्रौपदीं चाहृतां पुनः ॥ ११९२
स तैः परिवृतो राजा तत्रैवोपविवेश ह ।
प्रविवेशाश्रमं कृष्णा यमाभ्यां सह भाविनी ॥ ११९३
भीमसेनार्जुनौ चापि श्रुत्वा क्रोशगतं रिपुम् ।
स्वयमश्वांस्तुदंतौ तौ जवेनैवाभ्यधावताम् ॥ ११९४
इदमत्यद्भुतं चात्र चकार पुरुषोऽर्जुनः ।
क्रोशमात्रगतानश्वान् सैंधवस्य जघान यत् ॥ ११९५
स हि दिव्यास्त्रसंपन्नः कृच्छ्रकालेऽप्यसंभ्रमः ।
अकरोद्दुष्करं कर्म शरैरस्त्रानुमंत्रितैः ॥ ११९६
सैंधवस्तु हतान् दृष्ट्वा तथाऽश्वान्स्वान्सुदुःखितः ।
पलायनकृतोत्साहः प्राद्रवद्येन वै वनम् ॥ ११९७
तिष्ठ तिष्ठेति तं भीमः सहसाऽभ्यद्रवद्बली ।

मा वधीरिति पार्थस्तं दयावान् प्रत्यभाषत ॥ ११९८
तं भीमसेनो धावंतमवतीर्य रथाद्बली ।
अभिद्रुत्य निजग्राह केशपक्षे ह्यमर्षणः ॥ ११९९
समुद्यम्य च तं भीमो निष्पिपेष महीतले ।
शिरो गृहीत्वा राजानं ताडयामास चैव ह ॥ १२००
पुनः संजीवमानस्य तस्योत्पतितुमिच्छतः ।
पदा मूर्ध्नि महाबाहुः प्राहरद्विलपिष्यतः ॥ १२०१
किं नु शक्यं मया कर्तुं यद्राजा सततं घृणी ।
एवमुक्त्वा सटास्तस्य पंच चक्रे वृकोदरः ।
अर्धचंद्रेण बाणेन किंचिदब्रुवतस्तदा ॥ १२०२
भी० उ०—दासोऽस्मीति त्वया वाच्यं संसत्सु च सभासु च ।
एवं ते जीवितं दद्यामेषयुद्धजितो विधिः ।
वै० उ०—एवमस्त्विति तं राजा प्रत्युवाच जयद्रथः ॥ १२०३
तत एनं विचेष्टंतं बध्वा पार्थो वृकोदरः ।
रथमारोपयामास विसंज्ञं पांसुगुंठितम् ॥ १२०४
ततस्तं रथमास्थाय भीमः पार्थानुगस्तदा ।
अभ्येत्याश्रममध्यस्थमभ्यगच्छद्युधिष्ठिरम् ॥ १२०५
राजानं चाब्रवीद्भीमो द्रौपद्याः कथ्यतामिति ।
दासभावं गतो ह्येष पांडूनां पापचेतनः ॥ १२०६
तमुवाच ततो ज्येष्ठो भ्राता सप्रणयं वचः ।
मुंचेममधमाचारं प्रमाणा यदि ते वयम् ॥ १२०७
द्रौपदी चाब्रवीद्भीममभिप्रेक्ष्य युधिष्ठिरम् ।
दासोऽयं मुच्यतां राज्ञस्त्वया पंचसटः कृतः ॥ १२०८
एवमुक्तस्तु सव्रीडं तूष्णीं किंचिदवाङ्मुखः ।
जगाम राजन् दुःखार्तो गंगाद्वाराय भारत ॥ १२०९
स देवं शरणं गत्वा विरूपाक्षमुमापतिम् ।
तपश्चचार विपुलं तस्य प्रीतो वृषध्वजः ॥ १२१०

---

## २३.

यु० उ०—नात्मानमनुशोचामि नेमान्भ्रातॄन्महामुने ।
हरणं चापि राज्यस्य यथेमां द्रुपदात्मजाम् ॥ १२११

द्यूते दुरात्मभिः क्लिष्टाः कृष्णया तारिता वयम् ।
जयद्रथेन च पुनर्वनाच्चापि हृता बलात् ॥ १२१२

अस्ति सीमंतिनी काचिद्दृष्टपूर्वापि वा श्रुता ।
पतिव्रता महाभागा यथेयं द्रुपदात्मजा ॥ १२१३

मा० उ०—आसीन्मद्रेषु धर्मात्मा राजा परमधार्मिकः ।
पार्थिवोऽश्वपतिर्नाम सर्वभूतहिते रतः ।
अपत्योत्पादनार्थं च तीव्रं नियममास्थितः ॥ १२१४

कस्मिंश्चित्तु गते काले स राजा नियतव्रतः ।
ज्येष्ठायां धर्मचारिण्यां महिष्यां गर्भमादधे ॥ १२१५

प्राप्ते काले तु सुषुवे कन्यां राजीवलोचनाम् ।
क्रियाश्च तस्या मुदितश्चक्रे स नृपसत्तमः ॥ १२१६

साविञ्या प्रीतया दत्ता साविञ्या हुतया ह्यपि ।
सावित्रीत्येव नामास्याश्चक्रुर्विप्रास्तथा पिता ॥ १२१७

सा विग्रहवतीव श्रीर्व्यवर्धत नृपात्मजा ।
कालेन चापि सा कन्या यौवनस्था बभूव ह ॥ १२१८

तां सुमध्यां पृथुश्रोणीं प्रतिमां कांचनीमिव ।
प्राप्तेयं देवकन्येति दृष्ट्वा संमेनिरे जनाः ॥ १२१९

यौवनस्थां तु तां दृष्ट्वा स्वां सुतां देवरूपिणीम् ।
अयाच्यमानां च वरैर्नृपतिर्दुःखितोऽभवत् ॥ १२२०

पुत्रि प्रदानकालस्ते न च कश्चिद्वृणोति माम् ।
स्वयमन्विच्छ भर्तारं गुणैः सदृशमात्मनः ॥ १२२१

अप्रदाता पिता वाच्यो वाच्यश्चानुपयन्पतिः ।
मृते भर्तरि पुत्रश्च वाच्यो मातुररक्षिता ॥ १२२२

इदं मे वचनं श्रुत्वा भर्तुरन्वेषणे त्वर ।
देवतानां यथा वाच्यो न भवेयं तथा कुरु ॥ १२२३

एवमुक्त्वा दुहितरं तथा वृद्धांश्च मंत्रिणः ।
व्यादिदेशानुयात्रं च गम्यतां चेत्यचोदयत् ॥ १२२४

साऽभिवाद्य पितुः पादौ व्रीडितेव तपस्विनी ।
पितुर्वचनमाज्ञाय निर्जगामाविचारितम् ॥ १२२५

सा हैमं रथमास्थाय स्थविरैः सचिवैर्वृता ।

तपोवनानि रम्याणि राजर्षीणां जगाम ह ॥ १२२६
अथ मद्राधिपो राजा नारदेन समागतः ।
उपविष्टः सभामध्ये कथायोगेन भारत ॥ १२२७
ततोऽभिगम्य तीर्थानि सर्वाण्येवाश्रमांस्तथा ।
आजगाम पितुर्वेश्म सावित्री सह मंत्रिभिः ॥ १२२८
सा ब्रूहि विस्तरेणेति पित्रा संचोदिता शुभा ।
दैवतस्येव वचनं प्रतिगृह्येदमब्रवीत् ॥ १२२९
आसीच्छाल्वेषु धर्मात्मा क्षत्रियः पृथिवीपतिः ।
द्युमत्सेन इति ख्यातः पश्चाच्चांधो बभूव ह ॥ १२३०
विनष्टचक्षुषस्तस्य बालपुत्रस्य धीमतः ।
सामीप्येन हृतं राज्यं च्छिद्रेऽस्मिन्पूर्ववैरिणा ॥ १२३१
स बालवत्सया सार्द्धं भार्यया प्रस्थितो वनम् ।
महारण्यं गतश्चापि तपस्तेपे महाव्रतः ॥ १२३२
तस्य पुत्रः पुरे जातः संवृद्धश्च तपोवने ।
सत्यवाननुरूपो मे भर्तेति मनसा वृतः ॥ १२३३
ना० उ०—अहो बत महत्पापं सावित्र्या नृपते कृतम् ।
अजानंत्या यदनया गुणवान्सत्यवान्वृतः ॥ १२३४
एक एवास्य दोषो हि गुणानाक्रम्य तिष्ठति ।
संवत्सरेण क्षीणायुर्देहन्यासं करिष्यति ॥ १२३५
अ० उ०—एहि सावित्रि गच्छस्व अन्यं वरय शोभने ।
तस्य दोषो महानेको गुणानाक्रम्य च स्थितः ॥ १२३६
सा० उ०—सकृदंशो निपतति सकृत्कन्या प्रदीयते ।
सकृदाह ददानीति त्रीण्येतानि सकृत्सकृत् ॥ १२३७
दीर्घायुरथवाऽल्पायुः सगुणो निर्गुणोऽपि वा ।
सकृद्वृतो मया भर्ता न द्वितीयं वृणोम्यहम् ॥ १२३८
ना० उ०—स्थिरा बुद्धिर्नरश्रेष्ठ सावित्र्या दुहितुस्तव ।
अविघ्नमस्तु सावित्र्याः प्रदाने दुहितुस्तव ॥ १२३९
साधयिष्याम्यहं तावत्सर्वेषां भद्रमस्तु वः ।
एवमुक्त्वा खमुत्पत्य नारदस्त्रिदिवं गतः ॥ १२४०
राजापि दुहितुः सज्जं वैवाहिकमकारयत् ।

ततः सर्वान् समानीय द्विजानाश्रमवासिनः ।
यथाविधि समुद्वाहं कारयामासतुर्नृपौ ॥ १२४२

दत्वा सोऽश्वपतिः कन्यां यथाऽर्हं च परिच्छदम् ।
ययौ स्वमेव भवनं युक्तः परमया मुदा ॥ १२४३

सत्यवानपि तां भार्यां लब्ध्वा सर्वगुणान्विताम् ।
मुमुदे सा च तं लब्ध्वा भर्तारं मनसेप्सितम् ॥ १२४४

गते पितरि सर्वाणि संन्यस्याभरणानि सा ।
जगृहे वल्कलान्येव वस्त्रं काषायमेव च ॥ १२४५

परिचारैर्गुणैश्चैव प्रश्रयेण दमेन च ।
सर्वकामक्रियाभिश्च सर्वेषां तुष्टिमादधे ॥ १२४६

श्वश्रूं शरीरसत्कारैः सर्वैराच्छादनादिभिः ।
श्वशुरं देवसत्कारैर्वाचःसंयमनेन च ॥ १२४७

एवं तत्राश्रमे तेषां तदा निवसतां सताम् ।
कालस्तपस्यतां कश्चिदपाक्रामत भारत ॥ १२४८

सावित्र्या ग्लायमानायास्तिष्ठंत्यास्तु दिवानिशम् ।
नारदेन यदुक्तं तद्वाक्यं मनसि वर्तते ॥ १२४९

चतुर्थेऽहनि मर्तव्यमिति संचिंत्य भाविनी ।
व्रतं त्रिरात्रमुद्दिश्य दिवारात्रं स्थिताऽभवत् ॥ १२५०

श्वोभूते भर्तृमरणे सावित्र्या भरतर्षभ ।
दुःखान्वितायास्तिष्ठंत्याः सा रात्रिर्व्यत्यवर्तत ॥ १२५१

अद्य तद्दिवसं चेति हुत्वा दीप्तं हुताशनम् ।
युगमात्रोदिते सूर्ये कृत्वा पौर्वाह्णिकीः क्रियाः ॥ १२५२

ततः सर्वान्द्विजान्वृद्धान् श्वश्रूं श्वशुरमेव च ।
अभिवाद्यानुपूर्व्येण प्रांजलिर्नियता स्थिता ॥ १२५३

अवैधव्याशिषस्ते तु सावित्र्यर्थं हिताः शुभाः ।
ऊचुस्तपस्विनः सर्वे तपोवननिवासिनः ॥ १२५४

स्कंधे परशुमादाय सत्यवान्प्रस्थितो वनम् ।
सावित्री त्वाह भर्तारं नैकस्त्वं गंतुमर्हसि ॥ १२५५

सह त्वया गमिष्यामि न हि त्वां हातुमुत्सहे ।
उपवासान्न मे ग्लानिर्नास्ति चापि परिश्रमः ।

गमने च कृतोत्साहां प्रतिषेद्धुं न माऽर्हसि ॥ १२९७

साऽभिवाद्याब्रवीच्छ्वश्रूं श्वशुरं च महाव्रता ।
अयं गच्छति मे भर्ता फलाहारो महावनम् ॥ १२९८

इच्छेयमभ्यनुज्ञाता आर्यया श्वशुरेण ह ।
अनेन सह निर्गंतुं न मेऽद्य विरहः क्षमः ॥ १२९९

उभाभ्यामभ्यनुज्ञाता सा जगाम यशस्विनी ।
सह भर्त्रा हसंतीव हृदयेन विदूयता ॥ १२६०

अथ भार्यासहायः स फलान्यादाय वीर्यवान् ।
कठिनं पूरयामास ततः काष्ठान्यपाटयत् ॥ १२६१

तस्य पाटयतः काष्ठं स्वेदो वै समजायत ।
व्यायामेन च तेनास्य जज्ञे शिरसि वेदना ॥ १२६२

सोऽभिगम्य प्रियां भार्यामुवाच श्रमपीडितः ।
व्यायामेन ममानेन जाता शिरसि वेदना ॥ १२६३

शूलैरिव शिरो विद्धमिदं संलक्षयाम्यहम् ।
तत्स्वप्तुमिच्छे कल्याणि न स्थातुं शक्तिरस्ति मे ॥ १२६४

सा समासाद्य सावित्री भर्त्तारमुपगम्य च ।
उत्संगेऽस्य शिरः कृत्वा निषसाद महीतले । १२६५

मुहूर्तादेव चापश्यत्पुरुषं रक्तवाससम् ।
बद्धमौलिं वपुष्मंतमादित्यसमतेजसम् ॥ १२६६

श्यामावदातं रक्ताक्षं पाशहस्तं भयावहम् ।
स्थितं सत्यवतः पार्श्वे निरीक्षंतं तमेव च ॥ १२६७

तं दृष्ट्वा सहसोत्थाय भर्तुर्न्यस्य शनैः शिरः ।
कृतांजलिरुवाचार्ता हृदयेन प्रवेपती ॥ १२६८

दैवतं त्वाऽभिजानामि वपुरेतद्ध्यमानुषम् ।
कामया ब्रूहि देवेश कस्त्वं किं च चिकीर्षसि ॥ १२६९

य० उ०—पतिव्रतासि सावित्रि तथैव च तपोऽन्विता ।
अतस्त्वामभिभाषामि विद्धि मां त्वं शुभे यमम् ॥ १२७०

अयं ते सत्यवान्भर्ता क्षीणायुः पार्थिवात्मजः ।
नेष्यामि तमहं बद्ध्वा विद्ध्येतन्मे चिकीर्षितम् ॥ १२७१

अयं च धर्मसंयुक्तो रूपवान् गुणसागरः ।




नार्हो मत्पुरुषैर्नेतुमतोऽसि स्वयमागतः ॥
ततः सत्यवतः कायात् पाशबद्धं वशंगतम् ।
अंगुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात् ॥ १२७३
ततः समुद्धृतप्राणं गतश्वासं हतप्रभम् ।
निर्विचेष्टं शरीरं तद्बभूवाप्रियदर्शनम् ॥ १२७४
यमस्तु तं ततो बद्ध्वा प्रयातो दक्षिणामुखः ।
सावित्री चैव दुःखार्ता यममेवान्वगच्छत ॥ १२७५

य० उ०— निवर्त गच्छ सावित्रि कुरुष्वास्यौर्ध्वदेहिकम् ।
कृतं भर्तुस्त्वयानृण्यं यावद्गम्यं गतं त्वया ॥ १२७६

सा० उ०— यत्र मे नीयते भर्ता स्वयं वा यत्र गच्छति ।
मया च तत्र गंतव्यमेष धर्मः सनातनः ॥ १२७७
तपसा गुरुभक्त्या च भर्तुः स्नेहाद्व्रतेन च ।
तव चैव प्रसादेन न मे प्रतिहता गतिः ॥ १२७८
प्राहुः साप्तपदं मैत्रं बुधास्तत्त्वार्थदर्शिनः ।
मित्रतां च पुरस्कृत्य किंचिद्वक्ष्यामि तच्छृणु ॥ १२७९
नानात्मवंतस्तु वने चरंति धर्मं च वासं च परिश्रयं च ।
विज्ञानतो धर्ममुदाहरंति तस्मात्संतो धर्ममाहुः प्रधानम् ॥ १२८०

य० उ०—निवर्त तुष्टोऽस्मि तवानया गिरा स्वराक्षरव्यंजनहेतुयुक्तया ।
वरं वृणीष्वेह विनाऽस्य जीवितं ददामि ते सर्वमनिंदिते वरम् ॥ १२८१

सा० उ०—च्युतः स्वराज्याद्वनवासमाश्रितो विनष्टचक्षुः श्वशुरो ममाश्रमे ।
स लब्धचक्षुर्बलवान्भवेन्नृपस्तव प्रसादाज्ज्वलनार्कसन्निभः ॥ १२८२

य० उ०—ददानि तेऽहं तमनिंदिते वरं यथा त्वयोक्तं भविता च तत्तथा ।
तवाध्वना ग्लानिमिवोपलक्षये निवर्त गच्छस्व न ते श्रमो भवेत् ॥ १२८३

सा० उ०—श्रमः कुतो भर्तृसमीपतो हि मे यतो हि भर्ता मम सा गतिर्ध्रुवा ।
यतः पतिं नेष्यसि तत्र मे गतिः सुरेश भूयश्च वचो निबोध मे ॥ १२८४
सतां सकृत्संगतमीप्सितं परं ततः परं मित्रमिति प्रचक्षते ।
न चाफलं सत्पुरुषेण संगतं ततः सतां सन्निवसेत्समागमे ॥ १२८५

य० उ०—मनोऽनुकूलं बुधबुद्धिवर्द्धनं त्वया यदुक्तं वचनं हिताश्रयम् ।
विना पुनः सत्यवतोऽस्य जीवितं वरं द्वितीयं वरयस्व भाविनि ॥ १२८६

सा० उ०—हृतं पुरा मे श्वशुरस्य धीमतः स्वमेव राज्यं लभतां स पार्थिवः ।
जह्यात्स्वधर्मान्न च मे गुरुर्यथा द्वितीयमेतद् वरयामि ते वरम् ॥ १२८७
य० उ०—स्वमेव राज्यं प्रतिपत्स्यतेऽचिरान्न च स्वधर्मात्परिहास्यते नृपः ।
कृतेन कामेन मया नृपात्मजे निवर्त गच्छस्व न ते श्रमो भवेत् ॥१२८८
सा० उ०—अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा ।
अनुग्रहश्च दानं च सतां धर्मः सनातनः ॥ १२८९
एवं प्रायश्च लोकोऽयं मनुष्याः शक्तिपेशलाः ।
संतस्ते चाप्यमित्रेषु दयां प्राप्तेषु कुर्वते ॥ १२९०
य० उ०—पिपासितस्येव भवेद्यथा पयस्तथा त्वया वाक्यमिदं समीरितम् ।
विना पुनः सत्यवतोऽस्य जीवितं वरं वृणीष्वेह शुभे यदिच्छसि ॥१२९१
सा० उ०—ममानपत्यः पृथिवीपतिः पिता भवेत्पितुः पुत्रशतं तथौरसम् ।
कुलस्य संतानकरं च यद्भवेत्तृतीयमेतद्वरयामि ते वरम् ॥ १२९२
य० उ—कुलस्य संतानकरं सुवर्चसं शतं सुतानां पितुरस्तु ते शुभे ।
कृतेन कामेन नराधिपात्मजे निवर्त दूरं हि पथस्त्वमागता ॥ १२९३
सा० उ०—आत्मन्यपि न विश्वासस्तथा भवति सत्सु यः ।
तस्मात्सत्सु विशेषेण सर्वः प्रणयमिच्छति ॥ १२९४
सौहृदात्सर्वभूतानां विश्वासो नाम जायते ।
तस्मात्सत्सु विशेषेण विश्वासं कुरुते जनः ॥ १२९५
य० उ०—उदाहृतं ते वचनं यदंगने शुभे न तादृक् त्वदृते श्रुतं मया ।
अनेन तुष्टोऽस्मि विनाऽस्य जीवितं वरं चतुर्थं वरयस्व गच्छ च ॥१२९६
ममात्मजं सत्यवतस्तथौरसं भवेदुभाभ्यामिह यत्कुलोद्वहम् ।
शतं सुतानां बलवीर्यशालिनामिदं चतुर्थं वरयामि ते वरम् ॥ १२९७
य० उ०—शतं सुतानां बलवीर्यशालिनां भविष्यति प्रीतिकरं तवाबले ।
परिश्रमस्ते न भवेन्नृपात्मजे निवर्त दूरं हि पथस्त्वमागता ॥ १२९८
सा० उ०—सतां सदा शाश्वतधर्मवृत्तिः संतो न सीदंति न च व्यथंति ।
सतां सद्भिर्नाफलः संगमोऽस्ति सद्भ्यो भयं नानुवर्तंति संतः ॥ १२९९
संतो हि सत्येन नयंति सूर्यं संतो भूमिं तपसा धारयंति ।
संतो गतिर्भूतभव्यस्य राजन् सतां मध्ये नावसीदंति संतः ॥ १३००
आर्यजुष्टमिदं वृत्तमिति विज्ञाय शाश्वतम् ।
संतः परार्थं कुर्वाणा नावेक्षंति परस्परम् ॥ १३०१

न च प्रसादः सत्पुरुषेषु मोघो न चाप्यर्थो नश्यति नापि मानः ।
यस्मादेतन्नियतं सत्सु नित्यं तस्मात्संतो रक्षितारो भवंति ॥ १३०२

य० उ०—यथा यथा भाषसि धर्मसंहितं मनोऽनुकूलं सुपदं महार्थवत् ।
तथा तथा मे त्वयि भक्तिरुत्तमा वरं वृणीष्वाप्रतिमं पतिव्रते ॥ १३०३

सा० उ०—न तेऽपवर्गः सुकृताद्विना कृतस्तथा यथाऽन्येषु वरेषु मानद ।
वरं वृणे जीवतु सत्यवानयं यथा मृता ह्येवमहं पतिं विना ॥ १३०४

न कामये भर्तृविनाकृता सुखं न कामये भर्तृविनाकृता दिवम् ।
न कामये भर्तृविनाकृता श्रियं न भर्तृहीना व्यवसामि जीवितुम् १३०५

वरातिसर्गः शतपुत्रता मम त्वयैव दत्तो ह्रियते च मे पतिः ।
वरं वृणे जीवतु सत्यवानयं तवैव सत्यं वचनं भविष्यति ॥ १३०६

तथेत्युक्त्वा तु तं पाशं मुक्त्वा वैवस्वतो यमः ।
धर्मराजः प्रहृष्टात्मा सावित्रीमिदमब्रवीत् ॥ १३०७

एष भद्रे मया मुक्तो भर्ता ते कुलनंदिनि ।
अरोगस्तव नेयश्च सिद्धार्थः स भविष्यति ॥ १३०८

चतुर्वर्षशतायुश्च त्वया सार्धमवाप्स्यति ।
त्वयि पुत्रशतं चैव सत्यवान्जनयिष्यति ॥ १३०९

ते चापि सर्वे राजानः क्षत्रियाः पुत्रपौत्रिणः ।
ख्यातास्त्वन्नामधेयाश्च भविष्यंतीह शाश्वताः ॥ १३१०

पितुश्च ते पुत्रशतं भविता तव मातरि ।
मालव्यां मालवा नाम शाश्वताः पुत्रपौत्रिणः
भ्रातरस्ते भविष्यंति क्षत्रियास्त्रिदशोपमाः ॥ १३११

एवं तस्यै वरं दत्वा धर्मराजः प्रतापवान् ।
निवर्तयित्वा सावित्रीं स्वमेव भवनं ययौ ॥ १३१२

सावित्र्यपि यमे याते भर्तारं प्रतिलभ्य च ।
जगाम तत्र यत्रास्य भर्तुः शावं कलेवरम् ॥ १३१३

सा भूमौ प्रेक्ष्य भर्तारमुपसृत्योपगृह्य च ।
उत्संगे शिर आरोप्य भूमावुपविवेश ह ॥ १३१४

संज्ञां च स पुनर्लब्ध्वा सावित्रीमभ्यभाषत ।
प्रोष्यागत इव प्रेम्णा पुनःपुनरुदीक्ष्य वै ॥ १३१५

सुचिरं बत सुप्तोऽस्मि किमर्थं वा न बोधितः ।

क्व चासौ पुरुषः श्यामो योऽसौ मां संचकर्ष ह ॥ १३१६

सा० उ०—सुचिरं त्वं प्रसुप्तोऽसि ममांके पुरुषर्षभ ।
गतः स भगवान् देवः प्रजासंयमनो यमः ॥ १३१७

विश्रांतोऽसि महाभाग विनिद्रश्च नृपात्मज ।
यदि शक्यं समुत्तिष्ठ विगाढां पश्य शर्वरीम् ॥ १३१८

उपलभ्य ततः संज्ञां सुखसुप्त इवोत्थितः ।
दिशः सर्वा वनांतांश्च निरीक्ष्योवाच सत्यवान् ॥ १३१९

तद्यदि त्वं विजानासि किं तद्ब्रूहि सुमध्यमे ।
स्वप्नेन यदि वा दृष्टो मयि वा सत्यमेव तत् ॥ १३२०

तमुवाचाथ सावित्री रजनी व्यवगाहते ।
श्वस्ते सर्वं यथावृत्तमाख्यास्यामि नृपात्मज ॥ १३२१

सावित्री तत उत्थाय केशान्संयम्य भाविनी ।
पतिमुत्थापयामास बाहुभ्यां परिगृह्य वै ॥ १३२२

उत्थाय सत्यवांश्चापि प्रमृज्यांगानि पाणिना ।
सर्वा दिशः समालोक्य कठिने दृष्टिमादधे ॥ १३२३

तमुवाचाथ सावित्री श्वः फलानि हरिष्यसि ।
योगक्षेमार्थमेतत्ते नेष्यामि परशुं त्वहम् ॥ १३२४

कृत्वा कठिनभारं सा वृक्षशाखाऽवलंबिनम् ।
गृहीत्वा परशुं भर्तुः सकाशे पुनरागमत् ॥ १३२५

वामे स्कंधे तु वामोरूर्भर्तुर्बाहुं निवेश्य च ।
दक्षिणेन परिष्वज्य जगाम गजगामिनी ॥ १३२६

स्वस्थोऽस्मि बलवानस्मि दिदृक्षुः पितुरावुभौ ।
ब्रुवन्नेव त्वरायुक्तः संप्रायादाश्रमं प्रति ॥ १३२७

एतस्मिन्नेव काले तु द्युमत्सेनो महाबलः ।
लब्धचक्षुः प्रसन्नायां दृष्ट्यां सर्वं ददर्श ह ॥ १३२८

ततो मुहूर्तात्सावित्री भर्त्रा सत्यवता सह ।
आजगामाश्रमं रात्रौ प्रहृष्टा प्रविवेश ह ॥ १३२९

ब्रा० ऊ०—समागमेन पुत्रस्य सावित्र्या दर्शनेन च ।
चक्षुषश्चात्मनो लाभात्त्रिभिर्दिष्ट्या विवर्धसे ॥ १३३०

ततो राज्ञा सहासीनाः सर्वे ते वनवासिनः ।

जातकौतूहलाः पार्थ पप्रच्छुर्नृपतेः सुतम् ॥ १३३१

गौ० उ०—अकस्माच्चक्षुषः प्राप्तिर्द्युमत्सेनस्य ते पितुः ।
नास्य त्वं कारणं वेत्सि सावित्री वक्तुमर्हति ॥ १३३२

सा० उ०—एवमेतद्यथा वेत्थ संकल्पो नान्यथा हि वः ।
न हि किंचिद्रहस्यं मे श्रूयतां तथ्यमेव तत् ॥ १३३३

मृत्युर्मे पत्युराख्यातो नारदेन महात्मना ।
स चाद्य दिवसः प्राप्तस्ततो नैनं जहाम्यहम् ॥ १३३४

सुप्तं चैनं यमः साक्षादुपागच्छत्सकिंकरः ।
स एनमनयद्बद्ध्वा दिशं पितृनिषेविताम् ॥ १३३५

अस्तौषं तमहं देवं सत्येन वचसा विभुम् ।
पंच वै तेन मे दत्ता वराः शृणुत तान् मम ॥ १३३६

चक्षुषी च स्वराज्यं च द्वौ वरौ श्वशुरस्य मे ।
लब्धं पितुः पुत्रशतं पुत्राणां चात्मनः शतम् ॥ १३३७

चतुर्वर्षशतायुर्मे भर्ता लब्धश्च सत्यवान् ।
भर्तुर्हि जीवितार्थं तु मया चीर्णं त्विदं व्रतम् ॥ १३३८

ऋ० उ०—निमज्यमानं व्यसनैरभिद्रुतं कुलं नरेंद्रस्य तमोमये ह्रदे ।
त्वया सुशीलव्रतपुण्यया कुलं समुद्धृतं साध्वि पुनः कुलीनया ॥ १३३९

ततः प्रकृतयः सर्वाः शाल्वेभ्योऽभ्यागता नृप ।
आचख्युर्निहतं चैव स्वेनामात्येन तं द्विषम् ॥ १३४०

ऐकमत्यं च सर्वस्य जनस्याथ नृपं प्रति ।
सचक्षुर्वाऽप्यचक्षुर्वा स नो राजा भवत्विति ॥ १३४१

ततोऽभिवाद्य तान्वृद्धान्द्विजानाश्रमवासिनः ।
तैश्चाभिपूजितः सर्वैः प्रययौ नगरं प्रति ॥ १३४२

ततोऽभिषिषिचुः प्रीत्या द्युमत्सेनं पुरोहिताः ।
पुत्रं चास्य महात्मानं यौवराज्येऽभ्यषेचयन् ॥ १३४३

ततः कालेन महता सावित्र्याः कीर्तिवर्धनम् ।
तद्वै पुत्रशतं जज्ञे शूराणामनिवर्तिनाम् ॥ १३४४

भ्रातॄणां सोदराणां च तथैवास्या भवच्छतम् ।
मद्राधिपस्याश्वपतेर्मालव्यां सुमहद्बलम् ॥ १३४५

एवमात्मा पिता माता श्वश्रूः श्वशुर एव च ।
भर्तुः कुलं च सावित्र्या सर्वं कृच्छ्रात्समुद्धृतम् ॥ १३४६
तथैवैषापि कल्याणी द्रौपदी शीलसंमता ।
तारयिष्यति वः सर्वान् सावित्रीव कुलांगना ॥ १३४७

---

## २४

वै० उ०—एवं हृतायां भार्यायां प्राप्य क्लेशमनुत्तमम् ।
विहाय काम्यकं राजा सह भ्रातृभिरच्युतः ॥ १३४८
पुनर्द्वैतवनं रम्यमाजगाम युधिष्ठिरः ।
स्वादुमूलफलं रम्यं विचित्रबहुपादपम् ॥ १३४९
अनुभुक्तफलाहाराः सर्व एव मिताशनाः ।
न्यवसन् पांडवास्तत्र कृष्णया सह भार्यया ॥ १३५०
अज्ञातवासं वत्स्यंतश्छन्ना वर्षं त्रयोदशम् ।
उपोपविश्य विद्वांसः सहिताः संशितव्रताः ॥ १३५१
ये तद्भक्ता वसंति स्म वनवासे तपस्विनः ।
तानब्रुवन्महात्मानः स्थिताः प्रांजलयस्तदा ॥ १३५२
विदितं भवतां सर्वं धार्तराष्ट्रैर्यथा वयम् ।
छद्मना हृतराज्याश्चानयाश्च बहुशः कृताः ॥ १३५३
उषिताश्च वने कृच्छ्रं वयं द्वादशवत्सरान् ।
अज्ञातवाससमयं शेषं वर्षं त्रयोदशम् ॥ १३५४
तद्वसामो वयं छन्नास्तदनुज्ञातुमर्हथ ।
सुयोधनश्च दुष्टात्मा कर्णश्च सहसौबलः ॥ १३५५
जानन्तो विषमं कुर्युरस्मास्वत्यंतवैरिणः ।
युक्तचाराश्च युक्ताश्च पौरस्य स्वजनस्य च ॥ १३५६
अपि नस्तद्भवेद्भूयो यद्वयं ब्राह्मणैः सह ।
समस्ताः स्वेषु राष्ट्रेषु स्वराज्यस्था भवेमहि ॥ १३५७
इत्युक्त्वा दुःखशोकार्तः शुचिर्धर्मसुतस्तदा ।
संमूर्च्छितोऽभवद्राजा साश्रुकंठो युधिष्ठिरः ॥ १३५८

तमथाश्वासयन्सर्वे ब्राह्मणाः परमाशिषः ।
प्रयुज्यापृच्छ्य भरतान्यथा स्वान्स्वान्ययुर्गृहान् ॥ १३५९

सह धौम्येन विद्वांसस्तथा पंच च पांडवाः ।
उत्थाय प्रययुर्वीराः कृष्णामादाय धन्विनः ॥ १३६०

क्रोशमात्रमुपागम्य तस्माद्देशान्निमित्ततः ।
श्वोभूते मनुजव्याघ्राश्छन्नवासार्थमुद्यताः ॥ १३६१

पृथक्शास्त्रविदः सर्वे सर्वे मंत्रविशारदाः ।
संधिविग्रहकालज्ञा मंत्राय समुपाविशन् ॥ १३६२





# ४ विराटपर्व.

१

यु० उ०—विराटनगरे तात संवत्सरमिमं वयम् ।
कुर्वंतस्तस्य कर्माणि विहरिष्याम भारत ॥ १

सभास्तारो भविष्यामि तस्य राज्ञो महात्मनः ।
कंको नाम द्विजो भूत्वा मताक्षः प्रियदेवनः ॥ २

भी० उ०—पौरोगवो ब्रुवाणोऽहं बल्लवो नाम भारत ।
सूपानस्य करिष्यामि कुशलोऽस्मि महानसे ॥ ३

द्विपा वा बलिनो राजन् वृषभा वा महाबलाः ।
विनिग्राह्या यदि मया निग्रहीष्यामि तानपि ॥ ४

ये च केचिन्नियोत्स्यंति समाजेषु नियोधकाः ।
तानहं निहनिष्यामि रतिं तस्य विवर्धयन् ॥ ५

भ० उ०—प्रतिज्ञां षंढकोऽस्मीति करिष्यामि महीपते ।
ज्याघातौ हि महांतौ मे संवर्तुं नृप दुष्करौ ॥ ६

वलयैश्छादयिष्यामि बाहू किणकृताविमौ ।
पिनद्धकंबुः पाणिभ्यां तृतीयां प्रकृतिं गतः ॥ ७

वेणीकृतशिरा राजन्नाम्ना चैव बृहन्नडा ।
गीतं नृत्तं विचित्रं च वादित्रं विविधं तथा ॥ ८

शिक्षयिष्याम्यहं राजन् विराटस्य पुरस्त्रियः ।
न० उ०—अश्वबंधो भविष्यामि विराटनृपतेरहम् ॥ ९

ग्रंथिको नाम नाम्नाहं कर्मैतत्सुप्रियं मम ।
कुशलोऽस्म्यश्वशिक्षायां तथैवाश्वचिकित्सने ॥ १०

स० उ०—गोसंख्याता भविष्यामि विराटस्य महीपतेः ।
प्रतिषेद्धा च दोग्धा च संख्याने कुशलो गवाम् ॥ ११

तंतिपाल इति ख्यातो नाम्नाहं विदितस्तथा ।
निपुणं च चरिष्यामि व्येतु ते मानसो ज्वरः ॥ १२

अहं हि सततं गोषु भवता प्रहितः पुरा ।
वृषभानपि जानामि राजन् पूजितलक्षणान् ॥ १३

येषां मूत्रमुपाघ्राय अपि वंध्या प्रसूयते ।
यु० उ०—इयं हि नः प्रिया भार्या प्राणेभ्योऽपि गरीयसी ॥ १४
मातेव परिपाल्या च पूज्या ज्येष्ठेव च स्वसा ।
केन स्म द्रौपदी कृष्णा कर्मणा विचरिष्यति ॥ १५
द्रौ० उ०—सैरंध्र्यो रक्षिता लोके भुजिष्याः संति भारत ।
नैवमन्याः स्त्रियो यांति इति लोकस्य निश्चयः ॥ १६
साहं ब्रुवाणा सैरंध्री कुशला केशकर्मणि ।
सुदेष्णां प्रत्युपस्थास्ये राजभार्यां यशस्विनीम् ॥ १७
यु० उ०—कल्याणं भाषसे कृष्णे कुले जातासि भामिनि ।
न पापमभिजानासि साध्वी साधुव्रते स्थिता ॥ १८
पुरोहितोऽयमस्माकमग्निहोत्राणि रक्षतु ।
सूतपौरोगवैः सार्धं द्रुपदस्य निवेशने ॥ १९
इंद्रसेनादयश्चेमे रथानादाय केवलान् ।
यांतु द्वारवतीं शीघ्रमिति मे वर्तते मतिः ॥ २०
धौ० उ०—विदितं वो यथा सर्वं लोकवृत्तमिदं बत ।
विदितेऽपि च वक्तव्यं सुहृद्भिरनुरागतः ॥ २१
दृष्टद्वारो लभेद्द्रष्टुं रहस्येषु न विश्वसेत् ।
तदेवासनमन्विच्छेद्यत्र नाभिपतेत्परः ॥ २२
यो न यानं न पर्यंकं न पीठं न गजं रथम् ।
आरोहेत्संमतोऽस्मीति स राजवसतिं वसेत् ॥ २३
यत्रयत्रैनमासीनं शंकेरन्दुष्टचारिणः ।
न तत्रोपविशेद्यो वै स राजवसतिं वसेत् ॥ २४
न चानुशिष्याद्राजानमपृच्छंतं कदाचन ।
तूष्णीं त्वेनमुपासीत काले समभिपूजयेत् ॥ २५
नैषां दारेषु कुर्वीत मैत्रीं प्राज्ञः कथंचन ।
अंतःपुरचरा ये च द्वेष्टि यानहिताश्च ये ॥ २६
समर्थनासु सर्वासु हितं च प्रियमेव च ।
संवर्णयेत्तदेवास्य प्रियादपि हितं वदेत् ॥ २७
नाहमस्य प्रियोऽस्मीति मत्वा सेवेत पंडितः ।
अप्रमत्तश्च सततं हितं कुर्यात्प्रियं च यत् ॥ २८

रक्षिणां ह्यात्तशस्त्राणां स्थानं पश्चाद्विधीयते ।
नचोष्ठौ न भुजौ जानू न च वाक्यं समाक्षिपेत् ॥ २९
हास्यवस्तुषु चाप्यस्य वर्तमानेषु केषुचित् ।
नातिगाढं प्रहृष्येत न चाप्युन्मत्तवद्धसेत् ॥ ३०
श्रेयः सदात्मनो दृष्ट्वा परं राज्ञा न संवदेत् ।
विशेषयेन्न राजानं योग्यभूमिषु सर्वदा ॥ ३१
अम्लानो बलवान् शूरश्छायेवानुगतः सदा ।
सत्यवादी मृदुर्दांतः स राजवसतिं वसेत् ॥ ३२
अन्यस्मिन्प्रेष्यमाणे तु पुरस्ताद्यः समुत्पतेत् ।
अहं किं करवाणीति स राजवसतिं वसेत् ॥ ३३
यो वै गृहेभ्यः प्रवसन् प्रियाणां नानुसंस्मरेत् ।
दुःखेन सुखमन्विच्छेत् स राजवसतिं वसेत् ॥ ३४
समवेषं न कुर्वीत नौच्चैः सन्निहितो वसेत् ।
न मंत्रं बहुधा कुर्यादेवं राज्ञः प्रियो भवेत् ॥ ३५
न कर्मणि नियुक्तः सन् धनं किंचिदपि स्पृशेत् ।
प्राप्नोति हि हरन्द्रव्यं बंधनं यदि वा वधम् ॥ ३६
यानं वस्त्रमलंकारं यच्चान्यत्संप्रयच्छति ।
तदेव धारयेन्नित्यमेवं प्रियतरो भवेत् ॥ ३७
एवं संयम्य चित्तानि यत्नतः पांडुनंदनाः ।
संवत्सरमिमं तात तथाशीला बुभूषत ॥ ३८
यु० उ०—अनुशिष्टाः स्म भद्रं ते नैतद्वक्तास्ति कश्चन ।
कुंतीमृते मातरं नो विदुरं वा महामतिम् ॥ ३९
एवमुक्तस्ततो राज्ञा धौम्योऽथ द्विजसत्तमः ।
तेषां समिध्य तानग्नीन्मंत्रवच्च जुहाव सः ।
समृद्धिवृद्धिलाभाय पृथिवीविजयाय च ॥ ४०
ते वीरा बद्धनिस्त्रिंशास्तथा बद्धकलापिनः ।
बद्धगोधांगुलित्राणाः कालिंदीमभितो ययुः ॥ ४१
विध्यंतो मृगजातानि महेष्वासा महाबलाः ॥ ४२
लुब्धा ब्रुवाणा मत्स्यस्य विषयं प्राविशन् वनात् ।
धन्विनो बद्धनिस्त्रिंशा विवर्णाः श्मश्रुधारिणः ॥ ४३

स राजधानीं संप्राप्य कौंतेयोऽर्जुनमब्रवीत् ।
क्वायुधानि समासज्य प्रवेक्ष्यामः पुरं वयम् ॥ ४४
अ० उ०—इयं कूटे मनुष्येंद्र गहना महती शमी ।
भीमशाखा दुरारोहा श्मशानस्य समीपतः ॥ ४५
न चापि विद्यते कश्चिन्मनुष्य इति मे मतिः ।
योऽस्मान्निदधतो द्रष्टा भवेच्छस्त्राणि पांडवाः ।
समाधायायुधं शम्यां गच्छामो नगरं प्रति ॥ ४६
अथान्वशासन्नकुलं कुंतीपुत्रो युधिष्ठिरः ।
आरुह्येमां शमीं वीर धनूंष्येतानि निक्षिप ॥ ४७
तामुपारुह्य नकुलो धनूंषि निदधे स्वयम् ।
यत्र चापश्यत स वै तिरोवर्षाणि वर्षति ॥ ४८
शरीरं च शवस्यैकं समबध्नंत पांडवाः ।
विवर्जयिष्यंति नरा दूरादेव शमीमिमाम् ॥ ४९
विराटनगरं रम्यं गच्छमानो युधिष्ठिरः ।
अस्तौच्च मनसा देवीं दुर्गां त्रिभुवनेश्वरीम् ॥ ५०
यशोदागर्भसंभूतां नारायणवरप्रियाम् ।
नंदगोपकुले जातां मांगल्यां कुलवर्धनीम् ॥ ५१
ततो विराटं प्रथमं युधिष्ठिरो राजा सभायामुपविष्टमाव्रजत् ।
वैडूर्यरूपान्प्रतिमुच्य कांचनानक्षान्स कक्षे परिगृह्य वाससा ॥ ५२
अथापरो भीमबलः श्रिया ज्वलन्नुपाययौ सिंहविलासविक्रमः ।
खंजां च दर्वीं च करेण धारयन्नसिं च कालागमकोशमव्रणम् ॥ ५३
ततः केशान्समुत्क्षिप्य रेचिताग्राननिंदितान् ।
जुगूह दक्षिणे पार्श्वे मृदूनसितलोचना ॥ ५४
वासश्च परिधायैकं कृष्णं सुमलिनं महत् ।
कृत्वा वेषस्तु सैरंध्र्यास्ततो व्यचरदार्तवत् ॥ ५५
विराटस्य तु कैकेयी भार्या परमसंमता ।
आलोकयन्ती ददृशे प्रासादाद्द्रुपदात्मजाम् ॥ ५६
सहदेवोऽपि गोपानां कृत्वा वेशमनुत्तमम् ।
भाषां चैषां समास्थाय विराटं समुपाययौ ॥ ५७
अथापरो दृश्यत रूपसंपदा स्त्रीणामलंकारधरो बृहत्पुमान् ।
प्राकारवप्रे प्रतिमुच्य कुंडले दीर्घे च कंबूपरि हाटके शुभे ॥ ५८

अथापरो दृश्यत पाण्डवः प्रभुर्विराटराजं तरसा समेयिवान् ।
स वै हयानैक्षत तांस्ततस्ततो विराटराज्ञा मुदितेन पूजितः॥ ५९

---

## २

वसमानेषु पार्थेषु मत्स्यस्य नगरे तदा ।
महारथेषु छन्नेषु मासा दश समाययुः ॥ ६०
तस्मिन्वर्षे गतप्राये कीचकस्तु महाबलः ।
सेनापतिर्विराटस्य ददर्श द्रुपदात्मजाम् ॥ ६१
तां दृष्ट्वा देवगर्भाभां चरंतीं देवतामिव ।
कीचकः कामयामास कामबाणप्रपीडितः ॥ ६२
कीο उο—का त्वं कस्यासि कल्याणि कुतो वा त्वं वरानने ।
प्राप्ता विराटनगरं तत्त्वमाचक्ष्व शोभने ॥ ६३
लक्ष्मीः पद्मालया का त्वमथ भूतिः सुमध्यमे ।
अतीव भ्राजसे सुभ्रु प्रभेवेंदोरनुत्तमा ॥ ६४
अपि चेक्षणपक्ष्माङ्कं स्मितज्योत्स्नोपमं शुभम् ।
दिव्यांशुरश्मिभिर्वृत्तं दिव्यकांति मनोरमम् ॥ ६५
निरीक्ष्य चंद्रवक्त्रं ते लक्ष्म्यानुपमया युतम् ।
को नेह कृत्स्ने जगति कामस्य वशगो भवेत् ॥ ६६
कुड्मलांबुरुहाकारौ तव सुभ्रु पयोधरौ ।
कामप्रतोदाविव मां तुदतश्चारुहासिनि ॥ ६७
बलीविभंगचतुरं स्तनभारविनामितम् ।
कराग्रसंमितं मध्यं तवेदं तनुमध्यमे ॥ ६८
कामं प्रकामं सेव त्वं मया सह विलासिनि ।
नार्हसीहासुखं वस्तुं सुखार्हा सुखवर्जिता ॥ ६९
सैο उο—अप्रार्थनीयामिह मां सूतपुत्राभिमन्यसे ।
निहीनवर्णां सैरंध्रीं बीभत्सां केशकारिणीम् ॥ ७०
परदारास्मि भद्रं ते न युक्तं त्वयि सांप्रतम् ।
दयिताः प्राणिनां दारा धर्मं समनुचिंतय ॥ ७१
कीο उο—नार्हस्येवं वरारोहे प्रत्याख्यातुं वरानने ।
मां मन्मथसमाविष्टं त्वत्कृते चारुहासिनि ॥ ७२

